# KAUMUDI-SUDHÁKARA

A

## PRAKARANA.

BY

MAHÁMAHOPÁDHYAYA CHANDRAKÁNTA TARKÁLANKÁRA,
PROFESSOR, SANSCRIT COLLEGE, CALCUTTA.

*Published at the expense of*

***HARACHANDRA CHAUDHURI,***
***Zemindar, Sherepur, Mymensing.***

CALCUTTA:
PRINTED BY G. H ROUSE, BAPTIST MISSION PRESS.
1888.

# कौमुदीसुधाकरं

नाम

प्रकरणम्।



राजकीयसंस्कृतविद्यालयाध्यापक-

महामहोपाध्याय-

श्रीचन्द्रकान्ततर्कालङ्कारविरचितम्।



सेरपुरनगरवास्तव्येन

श्रीहरचन्द्रचतुर्धुरीणेन

स्वपुत्रविवाहोत्सवे प्रकाशितम्।



कलिकाताराजधान्यां

वाल्मिकिमिशनयन्त्रे

मुद्रितम्।



शाकाः १८१०।

# विज्ञापनम्।



मातुरङ्कशयस्य स्तनन्धयस्य करेण चन्द्रमसो ग्रहणेच्छावदन्तर्य्या-मिप्रेरणया ममापि तनुवाग्विभवस्य हृदये ग्रन्थनिर्म्माणाय मतिरुदयासीत्। "न कामवृत्तिर्व्वचनीयमीक्षते"—इति न्यायेन उत्कटेच्छावेगं नियमयितुरपारयता भगवत्प्रेरितेनैव मया कतिचिद्ग्रन्था निर्मिताः सन्ति। तेषु तावत् गोभिलगृह्यसूत्रभाष्यं गृह्यासङ्ग्रहभाष्यं श्राद्धकल्पभाष्यञ्चेति ग्रन्थत्रयमस्यातिकसमाजैर्मुद्रितमभूत्। प्रबोधशतकं सतीपरिणयञ्चेति ग्रन्थद्वयं धर्म्मैकतानहृदयेन संस्कृतविद्यावता सेरपुरनगरस्थान्यतमभूस्वामिना श्रीमद्गोविन्दकुमारचतुर्धुरीणमहाशयेन प्रचारितम्। वैशेषिकभाष्यन्तु सेरपुरनगरवास्तव्यस्य श्रीयुतराधावल्लभचतुर्धुरीणमहाशयस्य प्रयत्नेन संस्कृतविद्यानिष्णातस्य कस्यचिद्बन्धुवर्य्यस्य व्ययेन च मुद्रितमस्ति। स किल बन्धुवर्य्यो महाशयः नेच्छति स्वनामख्यापनमिति नात्र तदुल्लेखः कृतः। तत्त्वावलिरानन्दतरङ्गिणी चेति ग्रन्थद्वयं मयैव कथञ्चिदायासेन मुद्रितम्। अवशिष्टानां ग्रन्थानां मुद्राव्ययोपयोगिनोऽर्थस्याभावात् तन्मुद्रणादौ निवृत्ताभिलाषएवासम्। तदेवं हतोत्साहोऽहं ग्रन्थान्तरनिर्म्माणे प्रारब्धग्रन्थानामसम्पूर्णानां सम्पूरणे च कमपि यत्नं नाकरवम्। एवं गते सेरपुरनगरवास्तव्येनान्यतमभूस्वामिना विद्योत्साहिना संस्कृतानुरागिणा वदान्येन श्रीमता हरचन्द्रचतुर्धुरीणमहाशयेन मदीयानां सर्व्वेषामेव ग्रन्थानां प्रचारव्ययादिप्रदानाय प्रतिश्रुतवता महान्त-

सुखाहं प्रापितोऽस्मि । आशास्महे भगवतः प्रसादादसम्पूर्णानां प्रारब्धग्रन्थानां सम्पूर्त्तिरिदानीं सम्पत्स्यते इति ।

तत्र तावत् कौमुदीसुधाकरं नाम प्रकरणमिदं स्वसुतयोः श्रीमतोरायुष्मतोर्हेमचन्द्र-चारुचन्द्रयोर्व्विवाहोत्सवे तेनैव प्रचारितम् । प्रार्थये तत्र किमपि दृष्टिपातं सहृदयानाम् । परमत्र यद्यदसङ्गतं लक्ष्यते, तत्तत् कृपया शोधनीयं विद्वद्भिः । विक्रमोर्व्वशीयस्य पुरूरवसउन्मादवर्णनस्यातिरमणीयतया तद्रीत्यैवात्र सुधाकरस्योन्माद-उपवर्णितः,—इति शिवम् ।

ययोर्व्विवाहोत्सवएतदासीत्
प्रचारितं तौ सहितौ वधूभ्याम् ।
स्यातामविघ्नं चिरजीवनाढ्यौ
कुर्य्यात्तयोर्मङ्गलमीश्वरोऽपि ॥

अन्येऽपि धनिनस्तावत् सुतोद्वाहादिमङ्गले ।
आचरन्तु महात्मानएतादृशमहोत्सवम् ॥

कलिकातामहानगर्य्यां
राजकीयसंस्कृतविद्यालयात् ।
आषाढ़े मासि । शाकाः १८१० ।

सेरपुरनगरवास्तव्यस्य
श्रीचन्द्रकान्तशर्म्मणः ।

# शुद्धिपत्रम्

| पृष्ठे | पंक्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ९ | ११ | खट्टाङ्ग | खट्वाङ्ग |
| ११ | २ | पल्व | पक्ष (एवं परत्र) |
| ११ | २ | राज्ञिक | राल्लिक (एवं परत्र) |
| १३ | २ | कटः | कटाः |
| २९ | ९ | मुपेहि | मृपेहि |
| ३० | १९ | निट्टत्त | निवर्त्त |
| ३१ | १५ | सस्पद | सस्पृह |
| ३२ | ११ | समावस्थ | समावस्था |
| ३५ | १३ | स्तान | सान |
| ३९ | १८ | ऽङ्गेष | ऽङ्गेषु |
| ४१ | १८ | सुन्दर्य्य | सुन्दर्य्यै |
| ४२ | ७ | कामयमाना | कामयाना |
| ४६ | १३ | कम्पि | किम्पि |
| ४६ | १७ | अलौशङ्किते | अलोकशङ्किते |
| ४७ | १३ | कमपि | किमपि |
| ५१ | २० | कधिक | मधिक |
| ५२ | ३ | ज्जर | ज्वर |
| ५२ | ७ | ज्जलति | ज्वलति |
| ५२ | १५ | किमनोपचारपरि-श्रमेण क्लिश्याते | किमनेनोपचारपरि-श्रमेण क्लिश्यते |
| ५५ | २० | घटक्कातु | घटल्लाबु |
| ५७ | १७ | धर्म्मकृतानन्तरः | धर्म्मकृतानान्तरः |
| ६४ | १५ | ततः प्रविशति सुधाकरः | * * * * |
| ६५ | ८ | मञ्चरन् | विचरन् |
| ७१ | ८ | धम्म | धम्म |
| ७७ | १ | अमुन- | अमुनं- |
| ७९ | २ | शस्य | शष्प |

| पृष्ठे | | पंक्तौ | | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|---|---|
| ७९ | ... | १४ | ... | रञ्चना | वञ्चना |
| ८० | ... | १५ | ... | क्रमाना | क्रमाणा |
| ८१ | ... | १५ | ... | अस्मद्विधैर्ग्रे- | अस्मद्विधानां ग्र- |
| ८२ | ... | १ | ... | आकण्य | आकर्ण्य (एवं परत्र) |
| ८४ | ... | १२ | ... | धिणोति | धिनोति |
| ९० | ... | २ | ... | मवै | मवे |
| ९४ | ... | १८ | ... | राधिणं | राधिनं |
| १०८ | ... | ६ | ... | क्षमापनीयः | क्षमयितव्यः |
| ११५ | ... | ६ | ... | कादानीं | कीदानीं |
| ११५ | ... | २१ | ... | श्रयते | श्रूयते |
| ११७ | ... | १२ | ... | लतामि | लतामिव |
| ११८ | ... | २० | ... | जलदः | जलदैः |
| १२२ | ... | १५ | ... | सामाजिके | सामाजिकौ |
| १२५ | ... | १२ | ... | म्लायते ननु | म्लायत्येव न |
| १२९ | ... | १९ | ... | अव्याहतं मन्त्रमेतत् | अव्याहतो मन्त्र एषः |
| १४५ | ... | ५ | ... | भगवतो | भगवतः |
| १४५ | ... | ७ | ... | प्रात्यख्यातः | प्रत्याख्यातः |
| १४५ | ... | १६ | ... | काका | कापा |
| १४६ | ... | ४ | ... | भगवम | भगवन् |
| १४६ | ... | १० | ... | नुर्त्तनेन | नवर्त्तनेन |
| १४७ | ... | २ | ... | कापुषे | कापुरुषै |
| १४८ | ... | १२ | ... | संक्लिष्ट | संश्लिष्ट |
| १४९ | ... | १० | ... | सुका | सुधा |
| १५० | ... | १० | ... | भृगुना | भृगुणा |
| १५१ | ... | १६ | ... | दप | दर्पे |
| १५२ | ... | २ | ... | नन्दस्व | नन्द |
| १५२ | ... | १४ | ... | ग्टक्रौमः | ग्टल्लौमः |
| १५६ | ... | १२ | ... | विलाष | विलास |
| १५६ | ... | १९ | ... | स्पृहणीयं | स्पृहणीय (एवं परत्र) |

| पृष्ठे | | पंक्तौ | | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|---|---|
| १५७ | ... | ११ | ... | नयिष्ये | नेष्ये |
| १५८ | ... | ७ | ... | प्रेम्ने | प्रम्णे (एवं परत्र) |
| १५८ | ... | ९ | ... | संप्रोष्यत् | संयास्यत् |
| १५८ | ... | १९ | ... | वल्लौ | वल्लौ |
| १५८ | ... | १९ | ... | पल्व | पल्ल (एवं परत्र) |
| १५९ | ... | २० | ... | सरिस्मयम् | सविस्मयम् |
| १६५ | ... | ९ | ... | प्राप्नयं | प्राप्नेयं |
| १६५ | ... | ११ | ... | द्रूक्ष्मतेर्दुनि | द्रूत्तर्दुनिं |
| १६५ | ... | १२ | ... | सकले | शकले |
| १६६ | ... | ६ | ... | वशा | वसा |
| १६६ | ... | १८ | ... | प्रणष्टा | प्रनष्टा (एवं परत्र) |
| १६८ | ... | १९ | ... | दध्हिता | दथिता |
| १६९ | ... | २ | ... | तस्मात् | तस्मात् |
| १७१ | ... | १२ | ... | वध्वा | बद्ध्वा |
| १७१ | ... | १९ | ... | लोचनौ | लोचना (एवं परत्र) |
| १७२ | ... | ३ | ... | अभ्यर्थयाम्येनम् | अभ्यर्थये तावदेनम् |
| १७८ | ... | ६ | ... | विस्फुज्जथु | विस्फूर्ज्जथु |
| १७८ | ... | १२ | ... | स्फुटति किमति | स्फुडति किमिति |
| १८९ | ... | १२ | ... | च्यव | श्यव |
| १९० | ... | १५ | ... | प्रार्थयामि | प्रार्थये |
| १९३ | ... | १ | ... | पश्चात् | नानाऽऽ— |
| १९८ | ... | १४ | ... | विपर्य्ययाना | विपर्य्ययाणा |
| २०२ | ... | ५ | ... | दीर्घापाङ्गि | दीर्घापाङ्ग |
| २०२ | ... | २१ | ... | दीर्घापाङ्गी | दीर्घापाङ्गा |
| २११ | ... | १८ | ... | कर्म्मणो | कर्म्मणे |
| २१३ | ... | २१ | ... | श्रयता | मृगता |

**बवयोः पर्य्यावर्त्तनन्तु स्वयमेव कार्य्यम्**

# कौमुदीसुधाकरं

नाम

प्रकरणम् ।



## प्रथमोऽङ्कः ।

प्रत्यक्षाद्यैः प्रमितिकरणैर्लौकिकैरप्रमेयो-
वेदान्तानां निगमशिरसां वर्त्तते यः शिरःसु ।
सोऽयं शम्भुः परमपुरुषः केवलं भक्तिलभ्यो-
दिश्यात् कामं प्रलयरसिको मङ्गलं मङ्गलात्मा ॥

अपि च ।

गङ्गां दृष्ट्वा शिरसि मधुरध्वानतुङ्गोर्म्मिहस्तां
जातामर्षां सपदि विमुखीं हन्त शैलेन्द्रपुत्रीम् ।
किञ्चिद्वक्तुं न खलु कुशलः सम्भ्रमादिन्दुमौलि-
श्चिन्ताम्लानोभवतु भवतां भूयसे मङ्गलाय ॥

( नान्द्यन्ते )

सूत्रधारः । अलमतिप्रसङ्गेन । ( पुरतोऽवलोक्य ) अये ! महतीयं परिषत् । तदस्यां युक्तमस्माकं शिक्षा-

नैपुण्यं प्रदर्शयितुम् । अतश्चास्माभिः प्रियसुहृदो विश्वावसोः सकाशात्, यदेषा परिषत् कस्यापि प्रयोगस्य दर्शनाय साभिलाषा वर्त्तते इति । तत्पात्रवर्गमाहूय यथासमीहितं करोमि । (नेपथ्याभिमुखमवलोक्य) कः कोऽत्र भोः !

पारिपार्श्विकः (प्रविश्य) भाव, अयमस्मि । को नियोगः ?

सूत्र । मारिष ! नन्वेते महाभागा आर्य्यमिश्रा विदग्धा भगवन्तोभूमिदेवाश्च भूस्वामिनो हरचन्द्रस्य सुतयोर्हेमचन्द्रचारुचन्द्रयोर्व्विवाहसंसदमलङ्कुर्वन्ति । दृश्यतां तावत् ।

इतोगीतमितोवाद्यमितोनृत्यमितः स्तुतिः ।
इतश्च ब्रह्मघोषोऽयं, शं दिशन्ति कुमारयोः ॥

अस्ति खल्वस्यामस्माकं वचनावसरः । कुतः ?

पुरस्तादत्रस्तं परिचितकलानां कृतधिया-
मधीतं तत्प्रीतिं जनयति परामप्रतिहताम् ।
यशोऽध्येतुः साक्षाद्वहति महतामास्थरचितं
तथा शिक्षादाढ्यं रचयति महिम्नैव महताम् ॥

पारि । कतमं पुनः प्रबन्धमभिनेयं भावोमन्यते ?

सूत्र। मारिष, श्रूयताम्। अस्ति किल लौहित्यसलिलपवित्रीकृतोपकण्ठं चातुर्वर्ण्यनिवासभूतं कैकयेषु * सेरपुराभिधानं नगरम्। तत्र च, शाण्डिल्यान्वयधुरन्धरस्य धर्म्मैकतानस्य ब्रह्मविदोब्राह्मणस्य सिद्धान्तवागीशपदलाञ्छनस्य राधाकान्तस्यात्मसम्भवः महामहोपाध्यायपदभाक् तर्कालङ्कारपदलाञ्छनः ब्रह्ममयीपुत्रः कौथुमः चन्द्रकान्तोनाम ब्राह्मणः प्रतिवसति। स च स्वनिर्म्मितं कौमुदीसुधाकरं नाम प्रकरणमस्मासु समर्पितवान्। तमिमं प्रबन्धमभिनेतुमिच्छामः।

पारि। योऽसौ गृह्यसूत्रादीनामौलुक्यदर्शनस्य च भाष्यकर्त्ता? तत्त्वावलिप्रभृतीनाञ्च निर्म्माता?

सूत्र। अथकिम्।

पारि। भाव, प्रमाणप्रवीणस्य काव्यनिर्म्माणं पङ्गोर्नृत्यमिव परिषदोहास्यायैव भविष्यति।

सूत्र। ननु, न केवलं प्रमाणप्रवीणोऽयं, यावत् कविरप्यसौ। अनेन किल सतीपरिणयादीनि काव्यान्यपि निर्म्मितानि।

* ब्रह्मपुत्रात् कामरूपान्मध्यभागे तु कैकयः

पारि। भाव, तथापि किमियमस्याभिनवस्य कवेः कृतिरस्याः प्रौढ़परिषदः परितोषाय भविष्यति ?

सूत्र। नन्वभिनवस्येति वदता भवतैव दत्तोनिर्णयः।

तथाहि।

पद्मान्तरेष्वलघुनोमधुनोद्विरेफा-
यत् प्रार्थितस्य नितरां परितृप्तिभाजः।
सायन्तनानि कुमुदान्यविकाशभाञ्जि
गच्छन्ति, तत्र नवतैव निदानमेका॥

पारि। भाव, तथापि नातिप्रौढ़ः स प्रबन्धः इति यत्सत्यं संशयितं मे हृदयम्।

सूत्र। (सवैलक्ष्यम्) किं मारिषः प्रबन्धमेनं निर्गुणमेव मन्यते ?

पारि। मा मैवम्। निर्गुणं निर्दोषमित्येतत् द्वयमपि जगति निरालम्बनमेव। परन्तु दोषभूयिष्ठं तदिति सम्भावयामः।

सूत्र। मारिष, अलीकं सम्भावयसि। न खल्वर्व्वाचीनाः कवयोदोषभूयिष्ठमेव कवयन्ति। अस्तु वा, तथापि परिषदः प्रेक्षणानुग्रहेणैवास्य गुणवत्ता भविष्यति। पश्य।

सम्पर्कं महतामवाप्य भजते क्षुद्रः परं गौरवं
शुक्तौ स्वातिपयः परत्र न पुनर्मुक्ताफलं जायते।

वृद्धानां वनिताङ्गसङ्गतिवशादप्यारकूटं जना-
मन्यन्ते खलु काञ्चनं, गुणकरी श्लाघ्या सतां सङ्गतिः॥

पारि। एवमेतत्, किन्तु दोषभूयिष्ठमित्याशङ्कमानायाः परिषदः प्रेक्षणानुग्रहएव भविष्यति न वेति सन्दिह्यते।

सूत्र। मारिष, अनभिज्ञः खल्वसि सच्चरितानाम्।

गुणलेशानुरागेण दोषवन्तमपि स्फुटम्।
सत्यं सन्तोऽनुगृह्णन्ति केतकं भ्रमराइव॥

तस्य कवेः खल्वियं वाचोयुक्तिः।

कान्तानां मधुराधरप्रणयिता येषां मतास्तैरपि
प्रायः स्तोकरसं निपानविरहात् कौपं पयः पीयते।
कामं नागरिकाव्रजन्ति सततं ये राजमार्गाश्रया-
स्ते किं कार्य्यवशात् श्रयन्ति न पुनर्ग्राम्यां सृतिं सङ्कुलाम्॥

अपि च।

कामिनीस्तनपद्मेषु भूयोव्यापारितस्तु यः।
कठोरकरिकुम्भेषु स करः किं न दीयते॥

अस्तुवा, यथा मारिषः सम्भावयति; तथाप्यभिनयामः। कुतएतत्?

तिरस्कृतिरपि श्लाघ्या गुणज्ञानां न संशयः।
तिरस्कुर्व्वन्ति हि स्थाने सुतरान्ते कृतश्रमाः॥

अपि च।

पृथग्जनानां स्तुतिरप्यपार्था
यतो न जानन्ति गुणागुणान्ते।
विलोकनीयस्य न जातु शिल्प-
स्यान्धस्तवात् शिल्पिगुणप्रकर्षः॥

अन्यच्च।

गुणभूयिष्ठवत् दोषभूयिष्ठस्यापि प्रबन्धस्य प्रेक्षणे सवासनाः सामाजिकाएवाधिकारिणः। निर्व्वासनाः खल्वच स्तम्भकुड्यादिभ्योन विशिष्यन्ते।

पारि। किं ततः?

सूच। अधिकारपरिपालनेन आधिकारिका नोद्विज्यन्ते। पश्य।

सहस्रपत्रं मधुरं प्रतिक्तं कुटजन्तथा।
विलिहन्त्यविशेषेण कामं मधुलिहोद्वयम्॥

एतत्ततः।

अपि च।

अप्रौढ़ाऽप्यप्रगल्भाऽपि सरसा कविनिर्म्मितिः।
बालेव हृदयालूनां भावैः स्पृशति मानसम्॥

(नेपथ्ये)

साधु भरतपुत्र, साधु। यथाह भवान्,—अप्रौढ़ापीत्यादि पठति।

सूच। ( नेपथ्याभिमुखमवलोक्य ) अये! प्रियसुहृदा सालङ्कायनेनानुगम्यमानः सुधाकरइतएवागच्छति। तदिदानीमयुक्तमिहावस्थानम्। तदेहि गच्छावः।

( इति निष्क्रान्तौ )॥

( प्रस्तावना )।

( ततः प्रविशति यथानिर्दिष्टः सुधाकरः )।

सुधा। वयस्य सालङ्कायन, कथं भवान् मन्यते,—सम्यगाह भरतपुत्रः; अप्रौढ़ापीत्यादि पुनः पठति।

साल। अथकिम्।

( सुधाकरोवैचित्त्यं नाटयति )।

साल। वयस्य, किं चिन्तयसि?

सुधा। ( सावहित्थम् )। न किञ्चिदेवंविधम्।

साल। ( सप्रणयकोपम् )। कथं न किञ्चिदेवंविधम्! अन्यादृशएव दृश्यसे।

सम्प्रति हि।

अलसवलितदृष्टिः सोत्सुकत्वं विषादः
पुरतइव न तावत् सम्भ्रमस्ते क्रियासु।
वपुरपि रमणीयं चामलप्रोज्ज्वलत्वं
कमपि नवमनल्पं मन्युमभ्युन्नयन्ति॥

अथवा। तिष्ठतु रहस्यम्।

सुधा। (स्वगतम्) अतिमात्रमुपालब्धोऽस्मि प्रियवयस्येन। (प्रकाशम्) वयस्य, मा मैवम्। त्वयि रहस्यं न मयि,—इति कोऽयं नयः।

तथाहि।

देहद्वयमुपाश्रित्य जीवितस्थितिरावयोः।
समानुरागिणी भाति लतेवानेकहृद्द्रुमम्॥

अपि च।

सविधे स्वजनस्य चेतसो-
विवृतद्वारतयाऽनिवार्य्यया।
न मनागपि कैतवं भवे-
द्भवति स्वात्मनि का विचारणा॥

साल। कथय तर्हि भूतार्थम्।

सुधा। कथं न कथयामि। कथाशेषावसरएव ज्ञास्यसि।

साल। तेन हि कथाशेषमेव श्रोतुमिच्छामि।

सुधा। श्रूयताम्। ततः प्रचलितमहार्हास्तरण-क्षुद्रघण्टिका-विन्दुजालक-नक्षत्रमालाऽलङ्कृत-कल्पित-कुञ्जरकुलः, कथं कथमप्याधोरणनिशाताङ्कुशसंयमित-विजृम्भितबृंहित-मत्तमातङ्गः, परार्द्धपर्य्याणसनाथानवरतचर्व्यमाणखलीन-फेणपुञ्जारञ्जितसृक्क-

णीकोन्नमितवालहस्त-निरन्तरस्फीतघुरघुरायमा-
णरचितहुत्कारघोण-ह्रेषारवमुखराविष्कृतास्कन्दि-
तधौरितकरेचितवल्गितप्लुत-कुलीन-विनीत-तुर-
ङ्गमस्तोमः, पुष्परथसंवाह्यमानऋद्धिमल्लोकः, शनैः
शनैः सञ्चरत्कर्णीरथस्थकुलावलासकलः, ऊर्द्धीकृ-
तविचित्रातपत्रनिकरः, स्वहस्तधृतदण्डच्छत्रनिवा-
र्य्यमाणप्रचण्डमार्त्तण्डकिरणगच्छन्मध्यवित्तनिवहः,
अनेकगजवाजिमनुजचरणपातसंजनितचटचटाश -
ब्दः, समुत्थितरेणुजालधूसरितदिग्विभागः, इतस्त-
तोविलोक्यमानव्याघ्रचर्म्मखट्वाङ्गत्रिशूलप्रमुखोपकर-
ण-भस्मधूसरितकलेवरानेकरुद्राक्षमालावलम्बितर-
क्तपट्टिकानेपथ्यरुचिर-तपस्विपरिव्राजकः, उच्चाव-
चवेशविशेषशोभाप्रेक्षणीयजनसमाजः, चतुरकथा-
रचनाचतुरधूर्त्तजनानुगम्यमानपीवरस्तनजघनम-
न्थरप्रचलद्वारविलासिनीजनः, श्रूयमाणकलकलः,
प्रवृत्तोभगवत्याः कात्यायन्या यात्रामहोत्सवः ।

साल । ततस्ततः ?

सुधा । ततोऽहमसन्निहितत्वाद्भवतोबहुतरं विलम्ब्य
समुपजातकुतूहलः शनैः शनैरेकएव गतः कात्या-
यन्यायतनम् ।

साल । कार्य्यान्तरव्याक्षेपादपराद्धोऽस्मि प्रियवयस्यस्य । हन्त भोः!

एतत्करोमि, कृतमेतदथो करिष्ये
लोकस्य नाम विफला परिकल्पनैषा ।
स्वच्छन्दतो न खलु यन्त्रितसर्व्ववृत्तेः
स्पन्दोऽपि गूढ़भवितव्यतया नरस्य ॥

सुधा । वयस्य, मा मैवम् ।

पक्षपातो हि मनसः सुहृदां प्रीतये क्षमः ।
निष्प्रत्यूहा फलप्राप्तिर्नायत्ता खलु बन्धुषु ॥

अपि च । स्वजनप्रणयोऽपि रक्षणीयः । तदलमत्रा-शङ्कया ।

साल । (सहर्षम्) एवं न्विदम् । ततस्ततः?

सुधा । ततोऽहं महता जनसंमर्द्देनाकुलीक्रियमाणः कथं कथमपि प्रविश्य कात्यायन्यायतनं प्रणम्य भगवतीं निर्गत्यायतनमध्यात् यात्राप्रवृत्तलोकानां विचेष्टितान्यवलोकयितुमितस्ततस्तत्रैव कियन्तं का-लमचरम् ।

साल । प्रेक्षणीयं खल्वेतत् । ततस्ततः?

सुधा । ततोऽहं श्रमापनयनायैकस्मिन्नशोकतरुमूले किञ्चिदान्दोलितदीर्घिकासलिलालोलकलहंसम-

ण्डलम् आहृतजलयन्त्रशीकरं सम्भृतपरागजाल-मन्थरम् आवर्ज्जितनवपल्लवम् आपराह्णिकं समीरणमासेवमानः स्थितः ।

साल । रमणीयः खल्वत्र निदाघसमये आपराह्णिकः पवनः ।

इह हि,

नवपरिमलवाही निर्म्मलः पाटलानां
रचयति परितोषं साधु गन्धेन्द्रियस्य ।
अमृतमिव निषिञ्चन् लघु साक्षाज्जनानाम्
अपनयति च दैन्यं स्पर्शनः स्पर्शरम्यः ॥

ततस्ततः ?

सुधा । ततस्तत्रैव इतस्ततो यदृच्छया दृशं व्यापारयतः कात्यायनीमन्दिराभ्यर्णस्य कुलावलाजनविश्रामनिलयस्य उपर्य्यलिन्दे निपतिता मे दृष्टिः ।

साल । ततस्ततः ?

सुधा । ततश्च सखे, दृष्टं यत् द्रष्टव्यम् ।

साल । (सोत्सुकम्) कथमिव ?

सुधा । एवं हि दृष्टम् ।

पादाग्राङ्गुलिना विलासविमुखी भूयो लिखन्ती भुवं
सख्यभ्यर्णमवर्णशिल्पिघटितेवात्यन्तमस्पन्दिता ।

बाला काचिदरालपक्ष्ममधुरा लौल्योत्तरे लोचने
विस्तार्य्यास्तमितापरव्यवसितं मामापिबन्ती स्थिता ॥

साल । (स्वगतम्) हुं, तदिदं वैचित्त्यकारणं प्रियवयस्यस्य ! (प्रकाशम्) ततस्ततः ?

सुधा । किमन्यत् । अयइवायस्कान्तमणिना, तड़िदिव तैजसधातुना, तस्याः प्रमुग्धकटाक्षविक्षेपेण सहसैव समाकृष्टं मे हृदयम् ।

तदानीम्,

निवर्त्तितान्यव्यवसायजातं
प्रियावलोको हृदयं मदीयम् ।
क्षणाद्गुरूर्मीरिवातिवेलं
बलादिव प्रोन्मथयाञ्चकार ॥

साल । ततस्ततः ?

सुधा । ततोऽभूवं खल्वहम्;

लिखितइव पटान्ते चित्रकर्म्मप्रवीणै—
र्घटितइव सुदक्षैर्यन्त्रवत् शिल्पिमुख्यैः ।
तड़ितइव विवर्त्तैः प्रक्रमात्रः प्रियायाः
प्रणयमधुरचेष्टै र्लोचनैः स्पन्दशून्यः ॥

साल । (स्वगतम्) कथमतिभूमिं गतश्चित्तजन्मा वयस्यस्य । (प्रकाशम्) ततस्ततः ?

सुधा । क्षामक्षामशरीरयष्टिरसकृत् दृष्ट्वाऽथ मामुत्सुकं
बाला मय्यनुरागलोलमधुरस्निग्धाः कटाक्षच्छटाः ।
प्रक्षिप्य क्षणतत्परा मुकुलितैरङ्गैः कदम्बोपमा
व्यापारान् हृदयस्पृशोऽतिचतुरान् चक्रे मृगाक्षी पुनः ॥

ततः प्रभृति,

लिखितेव प्रविष्टेव निखातेव दिवानिशम् ।
अदृष्टाऽपि दुनोत्येषा हृदयं वेदनेव मे ॥

सखे, सालङ्कायन, पश्य महिमानं मकरकेतनस्य । यदस्य निर्देशवर्त्तिनः परस्परविरुद्धा अपि पदार्थाः सप्रसवादिवैकमायतनमनुवर्त्तन्ते ।

तथा हि,

अलक्ष्यपातः किल चित्तजन्मनो-
मृदुः प्रहारोऽपि दुनोति मानसम् ।
जडीकरोत्युन्मथयत्यथो मिथः
प्रमोदयत्युन्मदयत्यनेकशः ॥

साल । (स्वगतम्) अहो प्रभावः कन्दर्पस्य!

विलासो वाग्देव्याः सुललितकलाकेलिनिलयो-
निधानं पुण्यानां नयनिधिरथो धैर्य्यमहिमा ।
विनेता लोकानां स्थिरमतिरनीव स्थितिरतो-
विपर्य्यस्तावस्थां यदयमगमत् पुष्पविशिखैः ॥

भवतु, एवं तावत्। (प्रकाशम्) वयस्य, किमपि प्रष्टु-कामोऽस्मि।

सुधा। विस्रब्धं पृच्छ्यताम्।

साल। इदमेव तावत् प्रथमं पृच्छ्यते; या किल वि-लोकनेनैव प्रियवयस्यस्य हृदयमधिष्ठिता, न सा साधारणाङ्गनाजनसदृशी भवितुमर्हति। न खलु यया कयाचित् सौदामन्या विदीर्य्यते शिलोच्चयः। तदस्त्येव कोऽप्यतिशयस्तस्याः। तत्कथय कीदृश्य-साविति।

सुधा। सखे, वञ्चितोऽसि वेधसा तदानीमसन्नि-हितः। न दृष्टवानसि द्रष्टव्यम्।

कुसुमादपि कमनीयं सन्तर्पणममृतराशितोऽप्यस्याः।
नवनवसुषमाभूमिर्वपुरेणदृशां निराकरणम्॥

सर्व्वथा वचसामतीत्य विषयं वर्त्तते लोकोत्तरः कोऽपि रमणीयताप्रकारस्तस्याः। सा खल्वपरिचि-तदोषः षष्ठइन्द्रियार्थो मर्त्यलोकस्य, कुसुमास्त्रादपि सुकुमारतरं अपूर्व्वं जैत्रमायुधं कुसुमधन्वनः, परा निर्म्माणचातुरी प्रजापतेः। किं बहुना,

मुखं राकाचन्द्रः स खलु न कलङ्काङ्किततनु-
र्दृशौ पद्मप्राये समदिननिशीथं विकसिते।

मृणालाभौ बाहू प्रकृतिसुभगस्निग्धमधुरौ
वपुः कान्तं तस्याः कुसुमसुकुमारं मृगदृशः॥

नूनं तस्याएव निर्म्माणपाटवमभ्यस्यता वेधसा चन्द्रकलादयो मानसस्पृशः सुकुमारतराः पदार्थाः पूर्व्वमुत्पादिताः। मानसी वा सृष्टिः पुनरपि प्रवृत्ता परमेष्ठिनः। कथं नु खलु करतलविघट्टनापरुषस्य तादृशं सौकुमार्य्यं वपुषः। अथवा। नैषा विषयपराङ्मुखस्य ब्रह्मजडस्य ब्रह्मणः सृष्टिः। किन्तु,

त्रिभुवनजयलक्ष्मीमिच्छताऽन्यैरुपायैः
सुललितवपुरेषा निर्म्मिता मन्मथेन।
मधुरपि सुहृदोऽस्मिन् कर्म्मणि प्रार्थनीये
मुदितहृदय आसीद्द्वितीयः सहायः॥

साल। वयस्य, नैतादृशा आकारविशेषाः स्वल्पगुणा भविष्यन्ति। सर्व्वथा गुणनिधानं तत्रभवती। अथ, वयस्य-तत्रभवत्योस्तथाविधे अवस्थान्तरे किमपरं वृत्तम्?

सुधा। तस्मिन्नेव समये परिणतप्रायोदिवसः। अथ कुसुमामोदमन्थरे मन्दमन्दं वहति सन्ध्यासमीरणे, धूसरितदिग्विभागे, निर्व्वाणभूयिष्ठे पश्चिमाकाशप्रान्तलम्बिनि प्रचण्डज्वलदङ्गारपिण्डइव परि-

लोहिते मार्त्तण्डमण्डले, वलाहकच्छेदमनोहरे आरक्तवारुणीविहायसि, ईषन्मेचकमेघलेशमलिन-प्राये पूर्व्वाशामुखे,प्रारब्धनिवासगमनतया विरल-जनसंमर्दे, तस्याः प्रियवयस्या शनैः शनैरुपरित-नालिन्दात्तामवतार्य्य एकस्मिन् विरलजनसम्पाते प्रदेशे स्थित्वा संज्ञया मामाकारितवती ।

साल । (सौत्सुक्यम्) ततस्ततः ?

सुधा । ततोमिथोविदितास्मत्परिचया प्रापय्य तस्याः सकाशं सबहुमानं मामवोचत् । महाभाग, प्रण-ष्टोऽस्याः प्रियसख्या रक्षिवर्गः, समागतप्राया च सन्ध्या, तदहं तमन्विष्यामि, न च शक्नोम्येकाकिनी-मेनामुपेक्ष्य गन्तुम्, महाभागस्तावन्मुहूर्त्तमस्याः पार्श्ववर्त्ती भूत्वा करोत्वनुग्रहमवलाजनेषु। पर-दुःखकातराः खलु दयालवो भवन्ति,—इति ब्रुव-त्येव निष्क्रान्ता ।

साल । (स्मितं कृत्वा) सुष्ठु खलु संविहितं तया । मृगयु-हस्तगता मृगी न खलु दुःसाध्या भविष्यति। तत-स्ततः ?

सुधा । ततोऽहं महानयमनुग्रह इति पुलकितात्मा तस्या नातिदूरे स्थित्वा "भवति, विस्रब्धं स्थीयताम्,

अयन्ते रश्मिजनः पुरतएव वर्त्तते"—इत्यभिधाय स्थितः।

साल। (विहस्य) कथं नातिदूरे स्थित्वा, न पुनस्तामङ्कं नीत्वा?

सुधा। (सस्मितम्) अलं परिहासेन। कुलावला हि सा महानुभावा च न प्रसह्य ग्रहीतुं योग्या, विशेषतस्त्वस्मद्विधैः।

साल। आं, ततस्ततः?

सुधा। ततस्तस्या रमणीयतां स्पष्टमवलोकयतः परमानन्दनिर्भरेण निर्वृतं मे हृदयं, सन्तर्पितानि चाङ्गानि। पुरा खलु तस्याः,

अलक्ष्यसन्धि सौन्दर्य्यं यथावन्न विभावितम्।
सन्निधौ पुनरन्येव लक्षिता सा वराङ्गना॥

साल। अथ रहसि सन्निहिते वयस्ये कतमो व्यवसायस्तत्रभवत्या वृत्तः?

सुधा। न कश्चिदेवंविधः।

साल। शृणुमस्तावत्।

सुधा। शृणु,

मा मामप्यवलोकयदद्भुततरं नापश्यदप्यन्यतः
स्वच्छन्दस्फुरिताधरा भृशमभून्नैवाब्रवीत् किञ्चन।

ऐच्छद्गन्तुमितस्ततो न च ततः स्थानात् पदञ्चागमत्
श्वासान् केवलमुष्णदीर्घवपुषोऽत्याक्षीन्मृगाक्षी मुहुः ॥

साल । कथं न कश्चिद्देवंविधः । महतः खल्वयमनुरागबन्धस्य प्रकारः ।

सुधा । मा मैवम् । मुग्धानां कुलावलानामागन्तुकसन्निधौ लज्जाप्रकारः खल्वयम् ।

साल । (विहस्य) न खलु दर्शनमात्रेणैव तत्रभवती भवतोऽङ्कं नारूढ़वती,—इत्यतो लज्जाप्रकारोऽयम् ।

सुधा । (सस्मितम्) अपरिचितपूर्व्वेयं परिहासरसिकता प्रियवयस्यस्य ।

साल । मम, न पुनर्भवतः ? भवतु । ततस्ततः ?

सुधा । ततस्तस्मिन्नवसरे समागतप्रायो रश्मिवर्गः ।

साल । कथं गिरिकामनुसन्दधतः कृतक्षणस्य मार्ज्जारस्य सारमेयका अन्तरायाः संवृत्ताः । ततस्ततः ?

सुधा । ततस्तद्वयस्यया ससंभ्रममपवाहितोऽस्मि तस्मात् प्रदेशात् । तदानीञ्च,

यामो बाले, वयमिति मया गन्तुकामेन सोक्ता
व्यायत्पङ्केरुहदलनिभे लोचने लुप्तलौल्ये ।
मुग्धा मां प्रत्यहह न चिरं कुर्व्वती तच्चकार
ज्ञातवार्त्तां न खलु विषयः केवलं चेतसो यत् ॥

तद्वयस्य, किं कथयामि । अधुनाऽपि तस्याः,

कान्तं रसोत्तरवशादीषदकं विवर्त्तितग्रीवम् ।
मुग्धविलोचनमास्यं सोत्सुकमथितं मनः कुरुते ॥

अपिच,

लावण्यं तद्दलितवलितप्रेचितं पक्ष्मलाच्याः
साचात् पङ्केरुहपरिभवप्राप्तदीचो मुखेन्दुः ।
काऽपि च्छाया प्रकृतिमधुरा सस्पृहप्रेचणीया
स्मारं स्मारं कुवलयदृशस्तृप्यते नान्तरात्मा ॥

(इति विषादं नाटयति) ।

साल । वयस्य, समाश्वसिहि ।

अमृतमिव दृशो यां मन्यसे सारमूर्व्या-
स्त्वमपि विधिनिदेशाद्रत्नसारोऽसि तस्याः ।
तदिह मदनएव श्लाघनीयाभियोगो-
न खलु चिरमवश्यं मङ्गलं संविदध्यात् ॥

ततस्ततः ?

सुधा । ततः परापतिते तस्याः परिजने "भवति, अपक्रामति समयः साधयामस्तावत्, कथान्तरे स्मर्त्तव्योऽयं जनः"—इति ब्रुवन्नेवाहं निष्क्रान्तः ।

साल । ततस्ततः ?

सुधा । ततः साऽपि गच्छन्ती परावर्त्त्य परावर्त्त्य वदनं

सस्पृहमवलोक्य कर्णीरथमारूढ़ा। सखे, कातरं खल्वधुनाऽपि,

तदलसवलितं प्रेम्णा मुग्धं स्निग्धं विलोचनद्वितयम्।
प्रचलनसमये तस्या मधुरकटाक्षं मनः स्मरति॥

(इति निःश्वसिति)।

साल। अथ तत्रभवती कस्य पुण्यवतः कुलभूषणं किन्नामधेया च इति ज्ञातं वयस्येन?

सुधा। आं, ज्ञातं सखे, ज्ञातम्।

साल। कथमिव?

सुधा। तस्यां कर्णीरथमारूढ़ायां गच्छति च परिकरे सैव वयस्या दन्तपत्रिकाव्यपदेशेन पुनरागत्यास्मत्-सकाशं रहसि सर्वमकथयत्।

साल। अथ कस्यापत्यरत्नं सा?

सुधा। सा खल्वस्यैव नगरस्यालङ्कारभूतस्य सुगृहीत-नाम्नः पुण्यकीर्त्तेरेकमात्रमपत्यरत्नम्।

साल। (सप्रत्यभिज्ञम्)। या किल कौमुदीत्याख्यायते?

सुधा। अथकिम्। याऽपि तस्याः प्रियवयस्या, साऽपि तस्याएव स्वजनगन्धिनी सुन्दरी नाम।

साल। वयस्य, दिष्ट्या वर्द्धसे गुणोत्तरस्यामनुरागबन्ध-नेन। अथवा। कथमस्थाने मनसः प्रवणता

सम्भाव्यते भवद्विधस्य। वारुण्यामेव दिशि विश्राम-विनोदो हेममालिनः, पूर्व्वसन्ध्यायामेव निर्बन्धो भानुमत्प्रकाशस्य। शतह्रदाऽपि विहाय वलाहकं क्व रमताम्, तरङ्गिणी वा सिन्धुमृते क्व विश्राम्यतु। सर्व्वथा समाश्वसिहि। महानुभावा खल्वत्रभवती। न खलु तथाविधाया मनस्विन्या अन्यदाचि अन्य-च्चेतसि सम्भाव्यते। नूनमवितथएव भावबन्धस्तत्र-भवत्याः। यतः,

गुणावलीनां खलु सैकभूमि-
र्नैसर्गिकन्तत्र दृढ़व्रतत्वम्।
नैतद्विपर्य्येष्यति, कृत्रिमो यो
गुणः समश्नाति विपर्य्ययं सः॥

सुधा। (निःश्वस्य) वयस्य, एवमेतत्। तथापि वलवता संशयेन विहस्तितोऽस्मि मन्दभाग्यः। यत् सत्यं नाधिगच्छति स्थिरतां मे हृदयम्। कुतः?

सारल्यैकनिधानमेणनयना कारुण्यवारांनिधिः
सत्सङ्कल्पपरायणा प्रतिनिधिः सा धैर्य्यगाम्भीर्य्ययोः।
अस्मद्भाग्यविपर्य्ययोऽपि वलवानाशङ्कनीयः सखे,
तादृग्रत्नसमागमः कथमहो पुण्यैर्विना लभ्यते॥

साल। वयस्य, मा मैवम्।

जगति रुचिरतायाः सैव सत्यं विलास-
स्थलमपि गुणगणानां पात्रमेकः पृथिव्याम् ।
अकलुषमणिहेम्नोर्योगशोभां दिदृक्षुः
क्षपयति खलु विघ्नं पूर्व्वमस्मिन् विधिर्वः ॥

(नेपथ्ये)

सरणागदह्मि । अज्जा, परित्ताअध परित्ताअध[1] ।

सुधा । अभयं शरणागतस्य ।

(पुनर्नेपथ्ये सएव शब्दः)

सुधा । (श्रुतिमभिनीय) कथं योषित्स्वरसंयोगः ! (ससम्भ्रमम्) वयस्य वयस्य, अनेन खड्गेन झटिति प्रतिपद्यस्व शरणार्थिनीम् । ज्ञायतां कतमदत्याहितं, प्रतिक्रियताञ्च ।

साल । भवति, न भेतव्यं न भेतव्यं, दिष्ट्या महदनुवृत्तिस्त्वां रक्षति (इति खड्गमादाय निष्क्रान्तः) ।

सुधा । (स्वगतम्)

अबलाजनेषु लोकाः प्रतिकूलं कथमिवाचरन्ति मिथः ।
अथवा निष्करुणानां किं चित्रं परुषकृत्येषु ॥

(नेपथ्ये कलकलः)

---

(१) शरणागताऽस्मि । आर्य्याः परित्रायध्वं परित्रायध्वम् ।

(प्रविश्य सम्भ्रान्तो वञ्जुलकः) भट्टा, अच्छेरं अच्छेरं! को वि दस्सू तत्थभोदीं अक्कमिअ जाव ण किं पि अच्चाहिदं करइ, दाव अज्जसालंकाअणेण णिग्गिहीदो कहिं पि पपलाविअ गदो(१)।

सुधा। प्रियं नः। तेन हि शीघ्रं प्रवेशय तौ, इदन्ते प्रियनिवेदनपारितोषिकम्। (इति कटकमर्पयति)।

वञ्जु। जं भट्टा आणवेदि(२)। (इति कटकमादाय निष्क्रान्तः)

सुधा। कलावति, इतस्तावत्।

कला। (प्रविश्य) भट्टा, इअं म्हि कोणिओओ(३)?

सुधा। स्त्रीजनोपवेशनयोग्यमासनमुपहर।

कला। उवहरामि। (इति निष्क्रम्य आसनमादाय प्रविश्य) इदमासणं(४)। (इत्यासनं संस्थाप्य निष्क्रान्ता)।

(ततः प्रविशति सालङ्कायनमनुगता सुन्दरी)।

साल। आर्य्ये, अयं सुगृहीतनामा गुणराशिरिव

(१) भर्त्तः, आश्चर्य्यं आश्चर्य्यं! कोऽपि दस्युस्तत्रभवतीमाक्रम्य यावन्न किमप्यत्याहितं करोति, तावदार्य्यसालङ्कायनेन निगृहीतः कुत्रापि प्रपलाय्य गतः।

(२) यत् भर्त्ता आज्ञापयति।

(३) भर्त्तः, इयमस्मि, को नियोगः?

(४) उपहरामि। इदमासनम्।

मूर्त्तिमान् प्रियवयस्यः सुधाकरः पुरतएव तिष्ठति, उपसर्पतु भवती। (इति परिक्रामतः)।

सुन्द। (स्वगतम्) अम्म! अज्जसुहाअरस्स एदं घरं, अअं पि महाभाओ तस्स ज्जेव पिअवअस्सो सालं काअणो! (विमृश्य) भोदु, पिअसहीए णिसिट्ठत्थदूई कच्चं काहं। (सस्मितम्) मह अ[1]। (इत्युपसर्पतः)।

सुन्द। अज्ज, वंदामि[2]। (इति प्रणमति)।

सुधा। (स्वगतम्)। कथं सुन्दरी! (प्रकाशं सादरम्)। एहि इदमासनमास्यताम्। वयस्य, त्वमप्युपविश।

(यथास्थानं उभावुपविशतः)।

सुधा। (अपवार्य्य जनान्तिकम्) वयस्य, सेयम्।

साल। नखलु तत्रभवती कौमुदीयम्?

सुधा। नहि नहि सुन्दरीयम्।

साल। (सहर्षमात्मगतम्) दिष्ट्या अनपराद्धोऽस्मि प्रियवयस्यस्य। (प्रकाशम्) यद्येवं अत्रभवत्याः सकाशात् तत्रभवत्याः प्रवृत्तिमुपलप्स्यामहे।

(१) अहो! आर्य्यसुधाकरस्यैतद्गृहं अयमपि महाभागस्तस्यैव प्रियवयस्यः सालङ्कायनः। भवतु प्रियसख्या निसृष्टार्थदूतीकृत्यं करिष्यामि। मम च।

(२) आर्य्ये, वन्दे।

(सुन्दरी सालङ्कायनं तिर्य्यगीक्षते)।

सुधा। अपि नाम अपनीतः श्रमो भवत्याः ?

सुन्द। अज्जप्पसाआदो[१]।

सुधा। आर्य्ये, अकुटिलानां सख्यं साप्तपदीनमुच्यते कविभिः। तद्भवत्याएवानुग्रहो मां मुखरयति।

सुन्द। (सस्मितम्) अभूमी क्खु एरिसाणं मह्वोवआराणं अअं जणो, अणप्पीआ क्खु एव्वं उवअरीअइ, ता आणवेदु अज्जो[२]।

साल। (स्वगतम्) अहो लोकाचारचतुरता।

सुधा। यदि न रहस्यं तदामूलतः श्रोतुमिच्छामि, किमिदमत्याहितं कश्चास्य प्रभवइति।

सुन्द। सुणादु अज्जो। अत्थि णंदणुज्जाणस्स णादिदूरे चण्डिआअअणं[३]।

सुधा। यत् खलु मूर्त्तमिव कीर्त्तिकदम्बं तत्रभवतः पुण्यकीर्त्तेः।

सुन्द। तत्थ सङ्करा णाम परिव्वाइआ णिवसइ[४]।

(१) आर्य्यप्रसादात्।

(२) अभूमिः खलु ईदृशानां महोपचाराणामयं जनः, अनात्मीयाः खल्वेवमुपचर्य्यन्ते। तदाज्ञापयत्वार्य्यः।

(३) शृणोतु आर्य्यः। अस्ति नन्दनोद्यानस्य नातिदूरे चण्डिकायतनम्।

(४) तत्र शङ्करा नाम परिव्राजिका निवसति।

सुधा। आं ज्ञायते, महाप्रभावा सा परिव्राजिका।

सुन्द। अध इं। तोसे भअवदीए सआसं गदम्हि[१]।

सुधा। किं पुनर्निमित्तं तत्रभवत्याः प्रदोषसमये भगवतीसकाशगमनस्य ?

सुन्द। समीहिदफलस्स सन्तुअअस्साहरणं त्ति[२]।

सुधा। कस्येदं शान्त्युदकमाह्रियते ?

सुन्द। कुलाअलाउलरअणभूदाए सअलगुणेक्कणिलअरुवाए पिअसहीए कोमुइए इमं सन्तुअअं आहीरइ[३]।

सुधा। (सोद्वेगम्) किं तस्याः ?

सुन्द। सा क्खु कच्चाअणीजत्तामहूस्सवादो पडिणिउत्ता तदोज्जेव आरहिऊण अदिव्व असत्थशरीरा जादा। तदो इमं सन्तुअअं आहीरइ। सणिहइ क्खु से पुत्तिआए विअ भअवदी परिव्वाइआ[४]।

(१) अथ किं। तस्या भगवत्याः सकाशं गताऽस्मि।

(२) समीहितफलस्य शान्त्युदकस्याहरणमिति।

(३) कुलावलाकुलरत्नभूतायाः सकलगुणैकनिलयरूपायाः प्रियसख्याः कौमुद्या इदं शान्त्युदकमाह्रियते।

(४) सा खलु कात्यायनीयात्रामहोत्सवात् प्रतिनिवृत्ता तत एवारभ्य अतीवास्वस्थशरीरा जाता। तत इदं शान्त्युदकं आह्रियते। स्निह्यति खलु तस्याः पुत्रिकाया इव भगवती परिव्राजिका॥

सुधा । (सविषादमात्मगतम्) कथमतीवास्वस्थशरीरेत्याह ! !

आघातन्तुस्फुटतु, हृदयं दीर्य्यतां, दुर्ज्जयोऽसौ
कन्दर्पोऽपि क्षिपतु युगपत् पञ्च वाणानमोघान् ।
विच्छेदाग्निर्दहतु सुलभप्रार्थि मिथ्या मनो मे
प्राणाः शीघ्रं विफलजनुषो वज्रधारा व्रजन्तु ॥

(इत्युद्वेगं नाटयति) ।

साल । आर्य्ये, प्रियवयस्यसम्पर्कात् द्विजातिसुलभ-चापल्याच्च किमपि प्रष्टुकामोऽस्मि ।

सुन्द । (सहर्षमात्मगतम्) अम्मो महुरदा वाआणं, पुच्छ पुच्छ णिसिंचसु वअणामिएण कण्णा । (प्रकाशं) आणवेदु अज्जो(१) ।

साल । अथ तत्रभवत्याः कतमः प्रकारोऽस्वस्थशरी-रायाः ?

सुन्द । (स्वगतम्) अम्मो चादुलिअं(२) । (इति कृतकवैमनस्यं नाटयति) ।

सुधा । (निःश्वस्य स्वगतम्) ।

स्फुटतु हृदय, सुघोरं विप्रियाणां सहस्रं
प्रियसुहृदिह तावत् सोत्सुकत्वं प्रपन्नः ।

---

(१) अहो मधुरता वाचां, पृच्छ पृच्छ निषिञ्च वचनामृतेन कर्णौ । आज्ञापयत्वार्य्यः ।

(२) अहो चातुर्य्यम् ।

अथवा,

कथमपि ननु दैवे वामतामभ्युपेते
विरचयति निकामं मित्रमप्यप्रियाणि ॥

सुन्द। (निःश्वस्य) महाभाअ, सुणीअदु। अउव्वो पिअसहीए असत्थदाप्पआरो। सा क्खु दक्खिणाणिलादो उव्विज्जइ, फुज्जहुदो विअ कोइलकण्ठरआदो वीहइ, अणलपेण्डं विअ चन्दमण्डलं मुणइ, मलअअरसलेत्तसरीरावि परितप्पइ, णिआहसेव्वलिणी विअ अणुदिणं जिज्झइ से सरीरलट्ठी, पाहादिअचन्दमण्डलवण्डिमाणं वहइ मुहलच्छी, दअइ विरहकादराए चक्कआअवहूए, ण सक्कइ घरकवोअमिहुणं अणोण्णभावरसद्दं[१]।

(इत्यर्द्धोक्ते लज्जां नाटयति) ।

साल। (जनान्तिकम्)।

(१) महाभाग, श्रूयताम्। अपूर्व्वः प्रियसख्या अस्वस्थताप्रकारः। सा खलु दक्षिणानिलादुद्विजते, स्फूर्ज्जथोरिव कोकिलकण्ठरवाद्बिभेति, अनलपिण्डमिव चन्द्रमण्डलं मन्यते, मलयजरसलिप्तशरीराऽपि परितप्यते, निदाघशैवलिनीवानुदिनं क्षीयते तस्याः शरीरयष्टिः, प्राभातिकचन्द्रमण्डलपाण्डिमानं वहति मुखलक्ष्मीः, दयते विरहकातरायै चक्रवाकवध्वै, न शक्नोति गृहकपोतमिथुनं अन्योन्यभावरसार्द्रं ॥

वयस्य, अलमन्यथा सम्भाव्य। ननु भवानेवात्र निदानम्।

सुधा। (सवितर्कमात्मगतम्) अपि नाम ममैव भागधेयानां स्फुरितमेतत् स्यात्।

(विचिन्त्य सहर्षम्) अथवा, कृतं सन्देहेन।

सैवेयमुत्पलदृशो नितरामवस्था
या कामिनां भवति हृद्गितेऽभिलाषे।
चेतो यदेव मनुषे कुलिशं तदेत-
दाप्यायनामृतमतः स्थिरतामुपेहि॥

साल। कात्यायनीयात्रामहोत्सवे किमुद्वेगकारणं वृत्तं तत्रभवत्याः, येन ततएवास्वस्थशरीरा जाता?

सुन्द। (सस्मितमात्मगतम्) चदुर, अहिस्सो क्खु सि। (प्रकाशम्) महाभात्र, ण क्खु अस्सस्स उव्वेअकालणं अस्सो वेअ, ता इमस्सिं णत्थि से वाआविहवो। ता क्खमदु मं अज्जो[1]।

साल। (जनान्तिकं) वयस्य, कृतं संशयेन। दिष्ट्या वर्द्धामहे।

(१) चतुर, अभिज्ञः खल्वसि। महाभाग, न खल्वन्यस्योद्वेगकारणमन्यो वेद। तदस्मिन् नास्ति मे वाग्विभवः। क्षमतां मामार्य्यः।

तस्यास्तथाविधाऽवस्था शोचनीया न संशयः।
अमोघं दैवनिर्दिष्टं भवानपि महौषधम् ॥

सुधा। (—सुन्दरीं प्रति) अथ किमत्याहितं वृत्तमार्य्यायाः?

सुन्द। सुणादु अज्जो। अत्थि मसाणवाडस्स सआसे चामोण्डामन्दिरकिदावासो कावालिओ खण्ड-मोण्डोणाम(१)।

सुधा। स खलु दुरात्मा खण्डमुण्डः!

सुन्द। सो किल योअसिद्वीए सव्वलक्खणावेदां काम्पि कुमारिआं मग्गेइ(२)।

सुधा। ततस्ततः?

सुन्द। तदो एक्कआ कामदेव्वाअदणपडिणिउत्तमाणां पिअसहीमद्वमग्गे पेक्खिअ सव्वलक्खणोवेदा इअं मह कज्जसिद्वीए हुविस्सदि त्ति तां ओहत्तु-मुज्जओ(३)।

सुधा। अहो नैर्घृण्यम्! ततस्ततः?

(१) शृणोत्वार्य्यः। अस्ति श्मशानवाटस्य सकाशे चामुण्डामन्दिरकृता-वासः कापालिकः खण्डमुण्डो नाम।

(२) स किल योगसिद्धये सर्व्वलक्षणोपेतां कामपि कुमारिकां मृगयते।

(३) तत एकदा कामदेवायतनप्रतिनिवृत्तमानां प्रियसखीं अर्द्धमार्गे प्रेक्ष्य सर्व्वलक्षणोपेतेयं मम कार्य्यसिद्धये भविष्यति इति तामपहर्त्तु-मुद्यतः।

सुन्द । तदो अहं सपरिअणा पावस्सन्तराओ सम्बुत्ता[१] ।

सुधा । युज्यते, ततस्ततः ?

सुन्द । तदोपहुदि परिकुविदो मज्झ कावालिओ[२] ।

सुधा । ततस्ततः ?

सुन्द । तदो अज्ज असहाअं मम्पेक्खिअ, पावे, णिवारिअकोमुइहरणे, णणु इअं ण होसि, अअमहं खण्डमोण्डो तुमं ज्जेव भअवदीए वलिं उवहरामि,—त्ति आमोडिअ सिरोहरां मङ्गेह्लहीअ[३] ।

(इति वाष्पैः कण्ठरोधं नाटयति) ।

साल । (स्वगतम्) आः पाप, प्रपलाय्य गतोसि, किमत्र क्रियताम् । नूनमनुभविष्यसि फलमविनयस्य ।

सुधा । (सकरुणम्) विरमतु भवती । अलमात्मानं खेदयित्वा ।

सुन्द । तदो इमिणा महाभाएण परित्तादोम्हि[४] ।

(इति सस्पृहं सालङ्कायनमीक्षते) ।

(१) ततोऽहं सपरिजना पापस्यान्तरायः संवृत्ता ।

(२) ततः प्रभृति परिकुपितो मह्यं कापालिकः ।

(३) ततोऽद्य असहायां मां प्रेक्ष्य, पापे, निवारितकौमुदीहरणे, नन्वियं न भवसि, अयमहं खण्डमुण्डस्त्वामेव भगवत्यै चामुण्डायै वलिमुपहरामि,—इत्यामुच्य शिरोधरां मामग्रहीत् ।

(४) ततोऽनेन महाभागेन परित्राताऽस्मि ।

**साल** । (सोत्सुकमात्मगतम्) **कथम्!**

सेयं वामविलोचनाकुलमणिर्लावण्यलीलास्थली
वैदग्ध्यस्य नवेव मूर्त्तिरपरा कीर्त्तिर्मनोजन्मनः ।
प्रत्यङ्गं लिखितेव नाम करुणा निष्कारणा वेधसा
मामेषा चतुरैः कटाक्षरचनैर्मथ्नाति कोऽयं विधिः ॥

**वयस्य, यत् सत्यमद्यप्रभृति वयस्योऽस्मि संवृत्तो भवतः, इयमपि तस्याः । कुतः ?**

त्वमस्याः प्रेयस्या मुखकमललुब्धोऽस्यतितराम्
अहञ्चास्याः साक्षात् सुचतुरकटाक्षस्य वशगः ।
वयस्येयं तस्या अहमपि वयस्योऽस्मि भवतः
ममावस्थयोगात् कथमपि न वाच्यो विधिरिह ॥

(इति वैमनस्यं नाटयति) ।

**सुन्द** । (सोत्कण्ठम्) **अदि क्खु वाहइ पिअसहीए उवदावो । ता इच्छामि अज्जेण अव्भणुस्सादा गमिउं**(१) ।

**सुधा** । **युज्यते** । (नेपथ्याभिमुखमवलोक्य) **वञ्जुलक,**

**वञ्जु** । (प्रविश्य) **अअं म्हि**(२) ।

(१) अति खलु बाधते प्रियसख्या उपतापः । तदिच्छामि आर्य्येणाभ्यनुज्ञाता गन्तुम् ।

(२) अयमस्मि ।

सुधा। आलोकमादाय अग्रगामी भूत्वा वसतिं प्रापयैनाम्। वयस्य, त्वमपि तत्रभवत्याः पश्चाद्वर्त्ती भव।

(वञ्जुलको निष्क्रान्तः)।

सुन्द। जं मए मन्दभाइणीए उव्वेइदो अज्जो, ता क्खमीअदु अज्जेण[१]।

सुधा। मा मैवं, गृहमेतद्भवत्याः।

सुन्द। अणुग्गहीदोम्हि[२]।

(आलोकमादाय प्रविशति वञ्जुलकः)।

सुन्द। अज्ज, साहेमि। णमो दे[३]। इत्युत्तिष्ठति।

सुधा। गम्यतां पुनर्दर्शनाय, शिवस्ते पन्था अस्तु।

(सुधाकरवर्ज्जं सर्व्वे परिक्रम्य निष्क्रान्ताः)।

सुधा। (द्विपदिकया वहिरवलोक्य) अतिप्रौढिमुपागतः खल्वन्धकारः। सम्प्रति हि,

लिप्तइवाञ्जनपुञ्जैर्निर्म्मितइव सकलमेचकद्रव्यैः।
तमसा पूरितमध्यो निरन्तरो लक्ष्यते लोकः॥

(पुनर्द्विपदिकया ऊर्द्धमवलोक्य)।

अहो प्रौढ़ता रजन्याः रमणीयता च समयस्य।

(१) यन्मया मन्दभागिन्या उद्वेजित आर्य्यः, तत् क्षम्यतामार्य्येण।
(२) अनुगृहीताऽस्मि।
(३) आर्य्य, साधयामि। नमस्ते।

क्षुब्धाम्भोधिप्रकाशोलसदमलरुचिः काममाकाशदेशो-
मुक्ताहारप्रभासो व्यपगतकलुषास्तारकाः फेनकल्पाः ।
नैदाघोमातरिश्वा स्वनति च मधुरं श्रोत्रगात्रानुकूलो-
विश्रामं संलभन्ते श्रमकृशवपुषः प्राणिनः प्राप्तनिद्राः ॥

तदहमपि विश्राममेव प्रतिपत्स्ये ॥ (इति निष्क्रान्तः) ।

(निष्क्रान्ताः सर्वे)

इति कौमुदीसुधाकरे प्रथमोऽङ्कः ॥

---

# द्वितीयोऽङ्कः ।

(ततः प्रविशति चूतलतिका ।)

चूत । (परिक्रम्यावलोक्य च ) ओसाणप्पाओ दिअहो । आ-अवसुक्खो रुक्खअणिअहो हीरिअसारो विअ लोओ ण सुहेइ दिट्ठीं । दीणदामुवगदो हीरिअवत्तु सोअन्तो विअ दीसइ । अइणअगव्विदो दुट्ठासओ सहसा रिद्धिं पत्तो णीओविअ णिअन्तदुःसज्झेहिं पदावेहिं आउलेइअ लोअं परिक्खीणतेओ णिवादुम्मुहो पेक्खीअदि सुज्जो । विडविलंघिआणं इत्थिआणं विअ परिमिलाणाइं लक्खीअन्ति दिसाणं मुहाइं । (नेपथ्याभिमुखमवलोक्य) कधं णोमालिआ किं पि मन्तेमाणा इदोज्जेव्व आअच्छदि । जाव पडिवालेमि णं[१] । (इति स्थिता) ॥

---

(१) अवसानप्रायोदिवसः । आतपसुष्को वृक्षनिवहो हृतसारइव लोको न सुखयति दृष्टिं । दीनतामुपगतो हृतवस्तु शोचन्निव दृश्यते । अविनयगर्व्वितोदुष्टाशयः सहसा ऋद्धिं प्राप्तो नीचइव नितान्तदुःसह्यैः प्रतापैराकुलय्य लोकं परिक्षीणतेजा निपातोन्मुखः प्रेक्ष्यते सूर्य्यः । विटविलङ्घितानां स्त्रीणामिव परिम्लानानि लक्ष्यन्ते दिशां मुखानि । कथं नवमालिका किमपि मन्त्रयमाणा इतएवागच्छति । यावत् प्रतिपालयाम्येनाम् ।

(ततः प्रविशति नवमालिका ।)

चूत । हला णोमालिए, कहिं उण एव्वं सतुवरं पत्थि दासि जेण समीववट्टिणीं पि मं ण ओलोएसि[१] ?

नव । (स्वगतम्) अम्म चूअलदिआ ! (प्रकाशम्) हला चूअलदिए, भट्टिणीणिओअमणुचिट्ठन्तीए मइ तुवरए ण उवलक्खिदा सि, ता मरिसेहि दाव इमं अदिक्कमं[२] ।

चूत । ण क्खु अदिक्कमं एत्थ पेक्खामि। इमं तु पुच्छामि, कहिं अविलंविदे कम्मे भट्टिणीए णिउत्ता सि जेण एव्वं तुवरइ[३] ?

नव । भअवदीमाआरेदुं[४] ।

चूत । कहिं णिमित्ते[५] ?

(१) अयि नवमालिके, कुत्र पुनरेवं सत्वरं प्रस्थिताऽसि; येन समीपवर्त्तिनीमपि मां नावलोकयसि ?

(२) अहो चूतलतिका ! अयि चूतलतिके, भर्त्रीनियोगमनुतिष्ठन्त्या मया त्वरया नोपलक्षिताऽसि । तन्मर्षय तावदिममतिक्रमम् ।

(३) न खल्वतिक्रममत्र पश्यामि । इदन्तु पृच्छामि । कस्मिन्नविलम्बिते कर्म्मणि भर्त्रा नियुक्ताऽसि, येनैवं त्वर्य्यते ?

(४) भगवतीमाकारयितुम् ।

(५) कस्मिन् निमित्ते ?

नव । असुत्थसरीरा भट्टिदारिआ त्ति । तुमं उण कहिं पत्थिदासि[1] ?

चूत । पमदवणं[2] ।

नव । किं त्ति[3] ?

चूत । सुणाहि । असुत्थसरीरा भट्टिदारिआ अप्पाणं विणोदेउं पमदवणं गमिस्सदि[4] ।

नव । जइ भट्टिदारिआए पमदवणं गमेअव्वं ता किं त्ति तुमं दाणिं तत्थ यासि[5] ?

चूत । आणत्तं अज्जए सुन्दरीए, जधा, हञ्जे, चूअलदिए, पमदवणं णिज्जणं कदुअ तुमे अहं संहादव्वा, तदो पिअसहिसहिआ तत्थ गमिस्सं[6] ।

(१) असुस्थशरीरा भर्तृदारिकेति । त्वं पुनः कुत्र प्रस्थिताऽसि ?

(२) प्रमदवनम् ।

(३) किमिति ?

(४) शृणु । असुस्थशरीरा भर्तृदारिका आत्मानं विनोदयितुं प्रमदवनं गमिष्यति ।

(५) यदि भर्तृदारिकया प्रमदवनं गन्तव्यं, तत् किमिति त्वमिदानीं तत्र यासि ?

(६) आज्ञप्ताऽस्मि आर्यया सुन्दर्या, यथा, अयि चूतलतिके, प्रमदवनं निर्ज्जनं कृत्वा त्वयाऽहं सम्भावयितव्या । ततः प्रियसखीसहिता तत्र गमिष्यामि ।

नव । हला चूअलदिए, आसरापरिअरो तुमं भट्टिदारिआए इमादो कालरादो किं पि पुच्छिदुआमा म्हि[१] ।

चूत । हला रणोमालिए, पुच्छ विस्सद्धं यं सि पुच्छिदुआमा[२] ।

नव । एदं पुच्छामि, अवि राम जारिगज्जइ तुम्मेहिं का पीड़ा भट्टिदारिआए त्ति[३] ।

चूत । कधं अम्मेहिं जानीअदु । रां वेज्जा अवि एत्थ मूढ़ा सम्बुत्ता[४] ।

नव । (सविस्मयम्) किं वेज्जेहिं पि ण रिगच्चिदो विआरहेदू[५] ?

चूत । अधइं[६] ।

(१) अयि चूतलतिके, आसन्नपरिजनस्त्वं भर्तृदारिकायाः, अतः कारणात् किमपि प्रष्टुकामाऽस्मि ।

(२) अयि नवमालिके, पृच्छ विश्रब्धं यदसि प्रष्टुकामा ।

(३) एतत् पृच्छामि । अपि नाम ज्ञायते युष्माभिः का पीड़ा भर्तृदारिकायाः ? इति ।

(४) कथमस्माभिर्ज्ञायताम् । ननु वैद्या अप्येतस्मिन् मूढ़ाः संवृत्ताः ।

(५) किं वैद्यैरपि न निश्चितो विकारहेतुः ।

(६) अथकिम् ।

नव । जइ एव्वं कधं दाणिं चिइस्सिज्जइ[1] ?

चूत । विरआ चिइस्सआ[2] ।

नव । (सविषादम्) हद्धी हद्धी एत्तिअमत्तावि पीड़ा ण णिच्चिदा, कधं एदे चिइस्सअत्तणं अप्पणो वोल्लन्तो ण लज्जन्ति[3] ।

चूत । (निःश्वस्य) किं करीअदु । ण क्खु साहारणो अअं आअङ्को । सा क्खु कसणपच्छ ससिअला विअ अणुदिणं झिज्जइ अंगेसुं । मिलाअमाणकमलिणीं विअ णं महुरा च्छाहा णवर ण मुंचइ[4] ।

नव । कदमो उण एत्थ उवाओ होहिइ[5] ?

चूत । देव्वं जाणइ । सुंदरी उण भणइ अहं अस्सिं चिइस्सओ त्ति[6] ।

(१) यद्येवं कथमिदानीं चिकित्स्यते ?

(२) विरताश्चिकित्सकाः ।

(३) हा धिक् हा धिक् । एतावन्मात्राऽपि पीड़ा न निश्चिता, कथमेते चिकित्सकत्वमात्मनो वदन्तो न लज्जन्ते ?

(४) किं क्रियताम् । न खलु साधारणोऽयमातङ्कः । सा खलु कृष्णपक्षशशिकलेवानुदिनं क्षीयतेऽङ्गेषु । म्लायत्कमलिनीमिवैनां मधुरा च्छाया केवलं न मुञ्चति ।

(५) कतमः पुनरेतस्मिन्नुपायो भविष्यति ।

(६) दैवं जानाति । सुन्दरी पुनर्भणति अहमत्र चिकित्सक इति ।

नव। सव्वं तस्सिं संहवेइव्वइ। चउरा क्खु सा[१]।

चूत। अवित्रहवत्रणा दाणिं होदु[२]।

नव। हला चूअलदिए, एव्वं पि भवे[३]? (कर्णे कथयति)।

चूत। सहि, किं अम्हाणं इमिणा वित्रक्किदेण। ण क्खु अणुब्भिसो अअं अत्थो अम्हेहिं जीहग्गे कादुं सक्किज्जइ। किं तु जइ तुह तक्को संवोलइ, तइआ सोहणं होइ[४]।

नव। कधं वित्र[५]।

चूत। णं उवारूढजोव्वणा दाणिं भट्टिदारित्रा[६]।

नव। अदोज्जेव मह एसो तक्को[७]।

चूत। जुज्जइ। (प्रतीचीं दिशमवलोक्य) समागतप्पात्रा सं

(१) सर्वं तस्यां सम्भाव्यते। चतुरा खलु सा।

(२) अवितथवचना इदानीं भवतु।

(३) अयि चूतलतिके, एवमपि भवेत्?

(४) सखि, किमस्माकमनेन वितर्कितेन। न खल्वनुद्भिन्नोऽयमर्थोऽस्माभिर्जिह्वाग्रे कर्त्तुं शक्यते। किन्तु यदि तव तर्कः संवदति, तदा शोभनं भवति।

(५) कथमिव?

(६) ननु उपारूढयौवनेदानीं भर्तृदारिका।

(७) अतएव ममैष तर्कः।

आ, ता भट्टिणीणिओअं अणुचिट्ठ, अहं पि णवरि करणिज्जं करेमि(१) ।

नव । एसो गच्छामि । (इति परिक्रम्य पुनः परिवृत्य) हला चूअलदिए, मा दाव णं तक्कं कस्सवि कहेहि(२) ।

चूत । वीसत्था होहि(३) ।

नव । णिव्वुदोम्हि(४) । (इति परिक्रम्य निष्क्रान्ता) ।

चूत । (परिक्रम्य) इमं पमदवणं ण को वि जणो इमस्सिं दीसइ, ता गदुअ अज्जाए सुंदरीए णिवेदेमि(५) । (इति परिक्रामति ।)

(नेपथ्ये)

इदो इदो पिअसही(६) ।

चूत । (कर्णं दत्वा) अम्म! एसा अज्जा सुंदरी भट्टि-

---

१

(१) युज्यते । समागतप्राया सन्ध्या, तद्भर्त्रीनियोगमनुतिष्ठ । अहमप्यनन्तरकरणीयं करोमि ।

(२) एषा गच्छामि । अयि चूतलतिके, मा तावदेनं तर्कं कस्यापि कथय ।

(३) विस्रब्धा भव ।

(४) निर्वृताऽस्मि ।

(५) इदं प्रमदवनं न कोऽपि जनोऽत्र दृश्यते, तद्गत्वा आर्यायै सुन्दर्यै निवेदयामि ।

(६) इतइतः प्रियसखी ।

दारिआसहिआ इदोज्जेव आअच्छदि, ता अविलं-
वं संहावेमि णं(१)। (इति द्रुतपदं परिक्रम्य निष्क्रान्ता)।

(प्रवेशकः)।

(नेपथ्ये कौमुद्याः प्रावेशिक्याचिप्तिका)।

मडुअरविओअविडुरा मइलमुही माहवी समुल्लसइ।
सुज्जकरफंसकवलिअमिलाणकन्ती ण पुव्वं व्व(२)॥

(ततः प्रविशति कामयमानावस्था कौमुदी सुन्दरी कालिन्दी चूतलतिका च)

सुन्द। हला कोमइ, पेक्ख पेक्ख पवणलोलेहिं पल्लवेहिं अग्गहत्थेहिं विअ आआरेइ तुमं पमदवणं, पविस दाव णं(३)।

(सर्व्वाः प्रवेशं रूपयन्ति)।

कालि। इमं सिलाअलं अस्सेम(४)।

सुन्द। जधा दे रोअदि(५)।

---

(१) अहो एषा आर्य्या सुन्दरी भर्त्तृदारिकासहिता इतएवागच्छति, तदविलम्बं सम्भावयाम्येनाम्।

(२) मधुकरवियोगविधुरा मलिनमुखी माधवी समुल्लसति। सूर्य्यकरस्पर्शकवलितम्लानकान्तिः न पूर्व्वमिव॥

(३) अयि कौमुदि, पश्य पश्य पवनलोलैः पल्लवैरग्रहस्तैरिवाकारयति त्वां प्रमदवनं, प्रविश तावदेनत्।

(४) इदं शिलातलमाश्रयामः।

(५) यथा ते रोचते।

(सर्व्वा उपविशन्ति)।

कालि। सहि, पेक्ख पेक्ख, एसो पाडलपुप्फप्पराअमन्थरो मिउलसंचारी दीहिआजलसीअलो सुहप्फंसो वाओ आआमइ तुज्झे मुहअमलसेअजालअं(१)।

(कौमुदी तूष्णीमास्ते)।

सुन्द। इदो दाव पेक्ख, एदे वउलामोअमत्ता महुअरा मिलाणामिलाणविएअमन्थरा पए पए पआरिअन्ति(२)।

(कौमुदी भ्रमरशब्दं सूचयित्वा त्रासं रूपयति)।

कालि। (ससंभ्रमम्) हला सुन्दरि, पेक्ख पेक्ख आअङ्कवाउलां पिअसहीं(३)।

सुन्द। हला सहि, कोमइ, किमेव्वं तम्मसि(४)?

(१) सखि, पश्य पश्य, एष पाटलपुष्पपरागमन्थरो मृदुलसञ्चारी दीर्घिकाजलशीतलः सुखस्पर्शो वात आचामति तव मुखकमलस्वेदजालकम्।

(२) इतस्तावत् पश्य, एते वकुलामोदमत्ता मधुकरा म्लानाम्लानविवेकमन्थराः पदे पदे प्रतार्य्यन्ते।

(३) अयि सुन्दरि, पश्य पश्यातङ्कव्याकुलां प्रियसखीम्।

(४) अयि सखि, कौमुदि, किमेवं ताम्यसि?

(कौमुदी तथैवास्ते)।

सुन्द। णं भणामि सहि कोमइ, त्ति[१]।

कौमु। (प्रकृतिस्था भूत्वा) हला सुन्दरि, किं कहेसि?[२]

सुन्द। णं पुच्छामि, किमेव्वमट्ठाणे कादरासि जादा[३]?

कौमु। कधं कादरा होमि[४]।

सुन्द। कधं ण कादरासि, अणुदिणं अहिअअरं मिलाना दीससि, ता कहेहि कुदो इदं अवत्थन्तरं, जेण जाणिअ अम्हे वि पडिआरवरा होम्म। अलं सुउमारमप्पाणमाआसिअ[५]।

कालि। सोहणं बोलइ सुन्दरी[६]।

कौमु। किं कहेमि[७]।

(१) ननु भणामि सखि कौमुदि, इति।

(२) अयि सुन्दरि, किं कथयसि?

(३) ननु पृच्छामि किमेवमस्थाने कातराऽसि जाता?

(४) कथं कातरा भवामि।

(५) कथं न कातराऽसि, अनुदिनमधिकतरं म्लाना दृश्यसे, तत् कथय कुतइदमवस्थान्तरं, येन ज्ञात्वा वयमपि प्रतिकारपरा भवामः। अलं सुकुमारमात्मानमायास्य।

(६) शोभनं वदति सुन्दरी।

(७) किं कथयामि।

सुन्द। परे विअ अम्हे पच्चेसि[१] ।

कौमु। ण क्खु ण क्खु, उच्छसिअं मे तुज्झे[२] ।

सुन्द। कधमेव्वं संभवइ, जइ अम्हेहिं अंसग्गहणेण दुक्खभारस्स तुह लहुदा ण करीअदि[३] ।

कालि। हला कोमइ, अविअहं वोचइ सुन्दरी। समदुक्खसुहोक्खु सहीअणो होइ[४] ।

कौमु। (स्वगतम्) का गई। (प्रकाशम्, निःश्वस्य) कस्स वा अण्णस्स कहिस्सं। लज्जामि उण कहेउं[५] ।

(इति सलज्जमधोमुखी तिष्ठति)।

सुन्दरीकालिन्द्यौ। कहेहि कहेहि, अम्हेसुं वि लज्जसि?[६] ।

कौमु। अलं काहेउण, अप्पडिकज्जो अअमाअङ्को[७]।

सुन्दरीकालिन्द्यौ। सुणुमो दाव[८] ।

---

(१) परानिवास्मान् प्रत्येषि ।

(२) न खलु न खलु, उच्छ्वसितं मे यूयम् ।

(३) कथमेवं सम्भवति, यद्यस्माभिरंशग्रहणेन दुःखभारस्य तव लघुता न क्रियते ।

(४) अयि कौमुदि, अवितथं वक्ति सुन्दरी। समदुःखसुखः खलु सखीजनो भवति ।

(५) का गतिः। कस्य वा अन्यस्य कथयिष्यामि । लज्जे पुनः कथयितुम् ।

(६) कथय कथय, अस्मास्वपि लज्जसे ?

(७) अलं कथयित्वा । अप्रतिकार्य्योऽयमातङ्कः ।

(८) शृणुवस्तावत् ।

कौमु। अलं तुम्हे आआसिअ[१]।

सुन्द। अदोज्जेव णिव्बन्धो। सहिउं सक्किहिइ क्खु एव्वं वेअणा[२]।

कालि। हला अलीअसङ्किदे, सहीओ क्खु अम्हे[३]।

कौमु। जइ वो णिव्बन्धो सुणोअदु[४]।

सुन्दरीकालिन्द्यौ। ओहिदाओ म्हे[५]।

कौमु। (सुन्दरीं प्रति) कच्चाअणीजत्तामहुस्सअदिअहे तुमं मे संणिहिदा आसि[६]।

सुन्द। (सवैलक्ष्यम्) सुमरामि[७]।

। जआ अहं कुलाअलाअणविस्साममंदिरस्स उवरि अलिन्दे ट्ठिआ असोअरुक्खमूलट्ठिअं सरीरिणं विअ भअवन्तं अणंगं कम्पि पुरिसरअणं अणिमिसेण अच्छिणा णिज्झाअन्ती कण्ड-इअसरीरा संवुत्ता, तआ तुमए भणिदं, रूव-

(१) अलं वामायास्य ।

(२) अतएव निर्वन्धः। सोढुं शक्यते खल्वेवं वेदना ।

(३) अयि अलीकशङ्किते, सख्यौ खल्वावाम् ।

(४) यदि वां निर्व्वन्धः श्रूयताम् ।

(५) अवहिते स्वः ।

(६) कात्यायनीयात्रामहोत्सवदिवसे त्वं मम सन्निहिता आसीः

(७) स्मरामि ।

मुद्धा पअङ्गिआ सुहेण अग्गिं पविसइ, कहिम्पि मणिप्पहाए अणलब्भमादो फंसक्खमं रअणम्पि लहइ त्ति। दाणिं उण पुच्छसि कुदोइदं अवत्थन्तरं त्ति(१)।

सुन्द। (सप्रत्यभिज्ञम्) कधं अज्जसुहाअरणिमित्तो अअ-माअङ्को(२)।

कालि। (स्वगतम्) दिट्ठिआ अप्पाणुरूवे जणे अणुरत्ता पिअसही। अधआ, सुहाअरं ज्जेव कोमुई अणु-सरइ(३)।

(चूतलतिका सम्भ्रूभङ्गं हर्षं नाटयति)।

कौमु। (निःश्वस्य) सोअं अप्पडिकज्जो आअङ्को(४)।

(१) यदा अहं कुलावलाजनविश्राममन्दिरस्य उपर्य्यलिन्दे स्थिता अशोक-वृक्षमूलस्थितं शरीरिणमिव भगवन्तमनङ्गं कमपि पुरुषरत्नं अनि-मिषेणाक्ष्णा निध्यायन्ती कण्टकितशरीरा संवृत्ता, तदा त्वया भणितं; रूपमुग्धा पतङ्गिका सुखेनाग्निं प्रविशति, कदापि मणि-प्रभायामनलम्भमात् स्पर्शक्षमं रत्नमपि लभते इति। इदानीं पुनः पृच्छसि कुत इदमवस्थान्तरमिति।

(२) कथमार्य्यसुधाकरनिमित्तोऽयमातङ्कः।

(३) दिष्ट्या आत्मानुरूपे जने अनुरक्ता प्रियसखी। अथवा, सुधाकर-मेव कौमुदी अनुसरति।

(४) सोऽयमप्रतिकार्य्य आतङ्कः।

सुन्द। ण क्खु अप्पड़िकज्जो त्ति तक्केमि[१]।
कौमु। सहीसणेहो वेअभलेइ दे मदिं[२]।
सुन्द। कधं विअ?[३]
कौमु। (सविषादम्) णं पुरोभाइणि, राअमन्ती वसुमित्तो मं पत्थेइ त्ति सुणीअदि[४]।
सुन्द। सच्चं सुणीअदि, किं इमम्मि विसाअकालणं?[५]
कौमु। पिआ मे णेहवरअसो एस्सज्जादिसअं पेक्खन्तो सुहादिसओ होहिइ त्ति जइ तस्स ज्जेव मंदभाइणीं मं[६] (इत्यर्द्धोक्ते वाष्पैः कण्ठरोधं रूपयति)।
कालि। सहि, मा कादरा होहि[७]।
सुन्द। (सश्लाघमात्मगतम्) अम्म! सरिसवेइत्तणं पिअसहीए, जा सम्पदं अगणिइअ गुणं ज्जेव अग्गदो

(१) न खल्वप्रतिकार्य्य इति तर्कयामि।
(२) सखीस्नेहो विक्लवयति ते मतिम्।
(३) कथमिव?
(४) ननु पुरोभागिनि, राजमन्त्री वसुमित्रो मां प्रार्थयते इति श्रूयते।
(५) सत्यं श्रूयते, किमत्र विषादकारणम्?
(६) पिता मे स्नेहपरवश ऐश्वर्य्यातिशयं पश्यन् सुखातिशयो भविष्यतीति यदि तस्मै एव मन्दभागिनीं मां—
(७) सखि, मा कातरा भव।

करेइ। (प्रकाशम्) अलं अलं आवेएण। जइ एव्वं मणसि, पिदरं गहिदत्थं करेम्ह[१]।

कौमु। मा मा एव्वं, से क्खु मह पभवइ[२]।

सुन्द। णं पभवन्ताज्जेव विण्णवेज्जन्ति[३]।

कौमु। ण क्खु विण्णवणा एसो[४]।

सुन्द। का उण? [५]

कौमु। णं णिओअणा[६]।

सुन्द। कधं विअ? [७]

कौमु। एव्वं करीअदु त्ति भणिअं होइ[८]।

सुन्द। अलं पस्सएण, णत्थि अण्णो उवाओ[९]।

---

(१) अहो सदृशवेदित्वं प्रियसख्याः, या सम्पदमगणयित्वा गुणमेवाग्रतः करोति। अलमलमावेगेन, यद्येवं मन्यसे पितरं गृहीतार्थं कुर्म्मः।

(२) मा मैवं, स खलु मम प्रभवति।

(३) ननु प्रभवन्तएव विज्ञाप्यन्ते।

(४) न खलु विज्ञापनैषा।

(५) का पुनः?

(६) ननु नियोजना।

(७) कथमिव?

(८) एवं क्रियतामिति भणितं भवति।

(९) अलं प्रश्रयेण, नास्त्यन्य उपायः।

कौमु । अदोज्जेव हदा म्हि मंदभाइणी, सव्वधा पुण्णमणोरहो किदन्तो[१] ।

सुन्द । कधं एव्वं अणुऊलं देव्वं उवालहसि[२] ?

कौमु । कधं ण उवालहामि ; जेण एव्वं दुल्लहवत्तुम्मि विलोहिअ दिआणिसं·अहं परिदहिआमि[३] ।

सुन्द । (सस्मितम्) विआरहेदुअं अप्पणो जोव्वणं किं ण उवालहसि[४] ?

कौमु । (सासूयम्) अवेहि दुव्विणीदे अवेहि, ण तुमए मन्तिस्सं[५] ।

सुन्द । (विहस्य) सच्चं दुव्विणीदा अहं, तुमं उण सुविणीदा, जा पुरिसदंसणमत्तेण अप्पणो ण पहुवसि[६] !

कौमु । अवेहि एदामवत्थां गदए वि मए कोलसि[७] ।

सुन्द । ण कीलिस्सं[८] ।

---

(१) अतएव हताऽस्मि मन्दभागिनी, सर्व्वथा पूर्णमनोरथः कृतान्तः ।

(२) कथमेवमनुकूलं दैवमुपालभसे ?

(३) कथं नोपालभे; येनैवं दुर्लभवस्तुनि विलोभ्य दिवानिशमहं परिदह्ये।

(४) विकारहेतुकमात्मनो यौवनं किं नोपालभसे ?

(५) अपेहि दुर्विनीते, अपेहि, न त्वया मन्त्रयिष्ये।

(६) सत्यं दुर्विनीताऽहं, त्वं पुनः सुविनीता, या पुरुषदर्शनमात्रेण आत्मनोन प्रभवसि !

(७) अपेहि एतामवस्थां गतयाऽपि मया क्रीड़सि।

(८) न क्रीड़िष्यामि ।

काॢि। हला सुन्दरि, अदिमेत्तं क्खु वाहइ पिअ-सहीए उवदावो त्ति तक्केमि, ता उवअरम्ह दाव णं[१]।

सुन्द। हला कालिन्दि, एव्वं करेम्ह। हञ्जे चूअलदिए, उवआरोवअरणं दाव पिअसहीए[२]।

चूत। (निष्क्रम्य पुनः प्रविश्य) एदाइं मिणालाइं णलिणी-अलाइं च[३]। (इत्यर्पयति)।

(सुन्दरी मृणालवलयादिभिर्नाट्येन कौमुदीमलङ्कृत्य नलिनीदलानि हृदयेऽर्पयति, सर्व्वा नलिनीपत्त्रैर्वीजयन्ति च। कौमुदी वैक्लव्याधिक्यं नाटयति)।

सुन्द। किं दाणिं अहिअअरं तम्मइ पिअसही[४]?

कौमु। (सखेदम्) किं इमिणा उवआरपरिस्समेण किलिसिअन्ति पिअसहीओ। णं असो ज्जेव प्पआरो पहरन्तस्स अणंगस्स। असवंभं एव्व क्खु इन्धणं

(१) अयि सुन्दरि, अतिमात्रं खलु बाधते प्रियसख्या उपताप इति तर्कयामि, तदुपचरावस्तावदेनाम्।

(२) अयि कालिन्दि, एवं कुर्व्वः। अयि चूतलतिके, उपचारोपकरणं तावत् प्रियसख्याः।

(३) एतानि मृणालानि नलिनीदलानि च।

(४) किमिदानीमधिकतरं ताम्यति प्रियसखी?

कुणइ उव्वाअक्खो । असं च सहि[1],

(संस्कृतमाश्रित्य साखम्)

सन्निपातज्वरस्यान्तरन्तर्दाहे सुदारुणे ।
स्नानं यथोपचारोऽयमनर्थायैव भाति मे ॥

अपि च,

धारासारैरपि परिगतो वैद्युताग्निः समन्तात्
कादम्बिन्याः ज्वलति नितरामन्तरेऽनन्तरायः ।
सन्तापस्य स्फुरति करणे नूनमन्तःप्रकोपे
वाह्यैः किं स्यात्तदुपचरणैर्मामतश्चिन्तयध्वम् ॥

(इत्यश्रूणि मुञ्चति) ।

सख्यौ । (सविषादम्) आसां ओलंवेहि, णलिणी क्खु दिवाअरविरहे वि आसाए जीविदं धारेइ[2] ।

कौमु । सुलहो क्खु से पिओ पेक्खिदुं[3] ।

सुन्द । तुह वि ण दुल्लहो त्ति तक्केसि[4] ।

(१) किमनेनोपचारपरिश्रमेण क्लिश्यते प्रियसख्यौ । ननु अन्यएव प्रकारः प्रहरतोऽनङ्गस्य, अर्णवाम्भएव खल्विन्धनं करोत्यौर्व्वानलः । अन्यच्च सखि,

(२) आशामवलम्बस्व, नलिनी खलु दिवाकरविरहेऽप्याशया जीवितं धारयति ।

(३) सुलभः खलु तस्याः प्रियः प्रेक्षितुम् ।

(४) तवापि न दुर्लभ इति तर्कयामि ।

कौमु। (सदुःखस्मितम्) सुट्ठु क्खु अस्सासिदा म्हि पिअ-
सहीए, किमस्सं उवट्ठिआ सुहदिट्ठी[१]!

सुन्द। अविणाम दृच्छीअदि तस्स दिट्ठी[२]?

चूत। पच्चासस्सा[३]।

कालि। को संसओ[४]।

कौमु। (निःश्वस्य) ममं किं पुच्छसि, देव्वं पुच्छ[५]।

चूत। णं भणामि पच्चासस्सा त्ति[६]।

सुन्द। अइ का[७]?

चूत। भअवदो परिव्वाइआ[८]।

सुन्द। कधं तुमए जाणिअं[९]?

चूत। किं ण सुणंति अत्यभोदीओ[१०]।

(१) सुष्ठु खल्वाश्वासिताऽस्मि प्रियसख्या, किमन्यत् उपस्थिता शुभदृष्टिः

(२) अपिनाम इष्यते तस्य दृष्टिः?

(३) प्रत्यासन्ना।

(४) कः संशयः।

(५) मां किं पृच्छसि, दैवं पृच्छ।

(६) ननु भणामि प्रत्यासन्ना इति।

(७) अयि का?

(८) भगवती परिव्राजिका।

(९) कथं त्वया ज्ञातम्?

(१०) किं न शृण्वन्ति अत्रभवत्यः।

सुन्द । किं त्ति[१] ।

चूत । सुणध[२] ।

(सर्व्वा आकर्णयन्ति) ।

(नेपथ्ये)

आद्ये तत्त्वेऽभ्युदयति परस्थैर्य्यलाभाद्विलोलै-
स्त्यक्ता तावद्विगुणकलुषा भूमिकास्तिस्रएव ।
योऽसौ साक्षान्नियमितमरुत्प्राप्तयोगाधिकारै-
रन्तर्म्म्रग्यस्तमखिलगुरुं चेतसा चिन्तयामि ॥

(सर्व्वाः किञ्चित् सम्भ्रान्ताः । कौमुदी नलिनीदलादीनि गोपायितु-मारभते । ततः प्रविशति परिव्राजिका । सर्व्वा उत्तिष्ठन्ति) ।

परि । (विलोक्य) अलमलमायासेन । भस्मच्छन्नोऽप्य-नलोनिपुणैरुपलक्ष्यतएव ।

कौमु । (सलज्जम्) भअवदि वन्दामि[३] ।

(सर्व्वाः प्रणमन्ति) ।

परि । एकायनं तरललोलतरस्य काम्यो-
यस्तेतसो हृदि विलोक्यतएव साक्षात् ।
कन्दर्पदर्पशमनः परनिर्वृतीनां
दाता मनोरथसखस्तमिमं भजस्व ॥

(१) किमिति ?

(२) शृणुत ।

(३) भगवति, वन्दे

सुन्द । इमं सिलाअलं गेण्हातु भअवदी[१] ।

(कौमुदी सत्रपाऽधोमुखी मृणालवलयादीनि शनैरपसारयति) ।

परि । यूयमप्युपविशत ।

(सर्व्वा उपविशन्ति) ।

परि । (कौमुदीमवलोक्य) अलमात्मानमायास्य ।

म्लायच्छिरीषकुसुमोपमकान्तिमन्ति
भास्वद्वियोगविधुराब्जसमान्यमूनि ।
उच्चैर्निसर्गरुचिरत्वमनोरमाणि
नाङ्गानि ते न कथयन्तितरामवस्थाम् ॥

अपिच । वत्से,

उषसि नितरां पाण्डुः सातान्मृगाङ्कइवानिशं
सुतनु, वदनं वाधामुग्रां व्यनक्ति हृदि स्थिताम् ।
अनुदिनपरिणामक्षामा सहस्युदिनात्यये
रजनिरिव ते मूर्त्तिश्चित्तं दुनोति मनस्विनाम् ॥

मामपि न परामवगन्तुमर्हसि, द्वितीयां मां जननी-मवगच्छ, तदावेदय प्रभवमस्य ।

(कौमुदी सलज्जमधोमुखी तूष्णीमास्ते) ।

सुन्द । एसा णिवेदेमि, लज्जइ क्खु ऐसा वोल्लिदुं । इमस्सिं दाव उवप्पए भअवदीचलणा ज्जेव अम्हाणं

(१) इदं शिलातलं गृह्णातु भगवती

ओलंवणं, ता वच्छाए इमाए किवां कादुं अरिहेइ भअवदी(१) ।

कौमु । (जनान्तिकम्) विरम दाव, लज्जामि क्खु अहं भअवदीए मुहं दंसेदुं(२) ।

सुन्द । हला अलीअलज्जिदे, रक्खिदव्वो क्खु अप्पा(३) ।

परि । (निःश्वस्य) आन्तरः स्नेहो न खल्वन्यस्मै दर्शयितुं शक्यः, लिङ्गादपि तावदवगन्तुमर्हसि ।

सुन्द । सहीसणेहो मं वाउलेइ भअवदीए प्पसादो वि मुहरेदि, ता क्खमदु मं भअवदी(४) ।

परि । अपराधी किल क्षम्यते ।

सुन्द । जाणमु किवां भअवदीए(५) ।

परि । प्रत्ययमिदानीं श्रोतुमिच्छामि ।

सुन्द । सुणादु भअवदी । जो अह धम्मेक्कदानन्तरो

(१) एषा निवेदयामि, लज्जते खल्वेषा वदितुम् । अस्मिन् तावदुपप्लवे भगवतीचरणावेवास्माकमवलम्बनम् । तदेतस्यामस्यां कृपां कर्त्तुमर्हति भगवती ।

(२) विरम तावत् । लज्जे खल्वहं भगवत्यै मुखं दर्शयितुम् ।

(३) अयि अलीकलज्जिते, रक्षितव्यः खल्वात्मा ।

(४) सखीस्नेहोमां व्याकुलयति भगवत्याः प्रसादोऽपि मुखरयति, तत् क्षमतां मां भगवती ।

(५) जानीमः कृपां भगवत्याः ।

सअलविज्जापारदंसी दआवन्तो जुत्तव्ववहारो सच्चणिट्ठो विणई गुणरासी विअ मुत्तिमन्तो सुहाअरो णाम[१]।

परि। स खलु महात्मा सुधाकरः ।

(कौमुदी हर्षं नाटयति) ।

सुन्द। तं पिअसहीए अणुराअभाअणं ओगच्छदु भअवदी[२]।

(कौमुदी सासूयं सुन्दरीमङ्गुल्या ताड़यति) ।

परि। तस्मिन् गुणानां प्रभवेऽनुरक्ता
श्लाघ्यानुरूपे यदि वः सखीयम् ।
व्रीड़ाऽत्र का धर्म्मपथं प्रपन्ना,
श्रद्धा सती तत्त्वविदां न वाच्या ॥

तदहमपि समीहितसिद्धये यतिष्ये ।

सुन्द। जह भअवदी आणवेदि[३]।

कौमु। (सहर्षमात्मगतम्) अमिअं क्खु वअणं भअवदीए[४]।

---

(१) शृणोतु भगवती । योऽसौ धर्म्मैकतानान्तरः सकलविद्यापारदर्शी दयावान् युक्तव्यवहारः सत्यनिष्ठो विनयी गुणराशिरिव मूर्त्तिमान् सुधाकरो नाम ।

(२) तं प्रियसख्या अनुरागभाजनमवगच्छतु भगवती ।

(३) यथा भगवती आज्ञापयति ।

(४) अमृतं खलु वचनं भगवत्याः ।

परि । कथं पुनरस्मिन् श्लाघनीयेऽपि विषये उपप्लव-व्यपदेशइति न खल्वधिगच्छामि ।

सुन्द । ण क्खु इमो उवप्पवो(१) ।

परि । कः पुनः ?

सुन्द । वसुमित्तो णो पिअसहीं पत्थेइ(२) ।

परि । स्वतन्त्रः खल्वसौ किमत्र क्रियताम् ।

(कौमुदी विषादं नाटयति) ।

सुन्द । यं भअवदीए रोअदि । ण क्खु एसा सुहाअरं उज्झिअ अण्णस्सिं भावबन्धं कुणहिइ(३) ।

परि । अयि मुग्धे, एतदपि वक्तव्यम् !

सुन्द । सव्वधा भअवदी अम्हाणं गई । को उण एत्थ उवाओ होहिइ(४) ?

परि । (स्मितं कृत्वा) न खलु यो यत् प्रार्थयते स तल्लभतएव ।

सुन्द । जइ पिदा णं तस्स पडिवादेइ(५) ।

(१) न खल्वयमुपप्लवः ।

(२) वसुमित्रो नः प्रियसखीं प्रार्थयते ।

(३) यद्भगवत्यै रोचते । न खल्वेषा सुधाकरमुज्झित्वा अन्यस्मिन् भावबन्धं करिष्यति ।

(४) सर्व्वथा भगवती अस्माकं गतिः । कः पुनरत्रोपायो भविष्यति ?

(५) यदि पिता एनां तस्मै प्रतिपादयति ?

परि । निश्चिन्तेदानीं भव, शङ्किता खल्वहम्

(कौमुदी परितोषं नाटयति) ।

सुन्द । अणुगहीदा म्ह[१] ।

परि । कुत्र पुनर्वत्सया दृष्टः सुधाकरः ?

सुन्द । कच्चाअणीजत्तामहुस्सवे[२] ।

परि । युज्यते ।

सुन्द । तं उण अच्छरीयं संवुत्तम्[३] ।

परि । कथमिव ?

सुन्द । ण क्खु दंसणमत्तेण अणुरज्जीअदि[४]

परि । किमत्राश्चर्य्यम् । पश्य,

> क्षेत्रं प्रविश्य ननु तत्क्षणमेव तोयं
> साक्षादमुष्य सदृशं परिणाममेति ।
> चेतोऽप्यवाप्य विषयं परिकाङ्क्षणीयम्
> अज्ञाय जातु खलु तन्मयतामुपैति ॥

नूनमनेन दैवमनुकूलं तर्कयामि ।

सुन्द । कधं विअ[५] ?

---

(१) अनुगृहीताः स्मः ।

(२) कात्यायनीयात्रामहोत्सवे ।

(३) तत्पुनराश्चर्य्यं संवृत्तम् ।

(४) न खलु दर्शनमात्रेणानुरज्यते ।

(५) कथमिव ?

परि। नायमतिगूढ़स्तर्कः। कुतः?

आलोक्यन्ते जगति कति न प्रेक्षणीयाः मनुष्याः
किन्त्वात्मीयो हरति हृदयं दृष्टमात्रः प्रसह्य।
सन्त्येवोच्चैर्मधुरललितप्रार्थनीयाः पदार्था-
श्चन्द्रं प्रेक्ष्य द्रवति सहसा केवलं चन्द्रकान्तः॥

अपिच,

सान्निध्यमात्रात् यत्किञ्चित् कुत्रचित् प्रतिविम्बते।
दैवस्यैव निदेशोऽयं रागोऽन्यः स्फटिके यथा॥

(दिगन्तमवलोक्य)

कथं कथाप्रसङ्गेन सन्ध्याऽतिक्रमोऽपि नोपलक्षितः!

सम्प्रति हि

कालेन संरूढ़पदो भविष्य-
न्नल्पोऽन्धकारः शनकैरुपैति।
दोषाप्रसङ्गादिमलेऽपि लोके
पाप्मेव साक्षादविलक्ष्यजन्मा॥

त्वरयते मां सायन्तनो विधिः, साधयामस्तावत्।

(इत्युत्तिष्ठति)।

(सर्व्वाः प्रणमन्ति)।

परि। समीहितसिद्धिर्भूयात्। (इति निष्क्रान्ता)।

सुन्द। हला कोमइ, इह ज्जेव सीअलप्पदेसे णिव्वि-सीअदु पओसो[१]।

---

(१) अयि कौमुदि, इहैव शीतलप्रदेशे निर्विश्यतां प्रदोषः।

कौमु। वाहिरे अच्छन्ति मे सारिआओ[१]।

सुन्द। हञ्जे चूअलदिए, तुमं दाव घरं पावेहि सारिआओ[२]।

चूत। तह[३] (इतिनिष्क्रान्ता)।

कालि। अहम्पि साहेमि[४]।

कौमु। किं त्ति[५]?

कालि। अत्थि मे पओअणविसेसो[६]।

कौमु। हला सुन्दरि, अम्हेवि गच्छामो[७]।

कालि। चिट्ठदु पिअसही, इअं अहं आगदा ज्जेव[८] (इतिनिष्क्रान्ता)।

(कौमुदी दक्षिणानिलस्पर्शं सूचयित्वा विषादं नाटयति)।

सुन्द। हला कोमइ, अलाहि विसाएण, अस्सत्था दाणिं होहि[९]।

---

(१) वहिः सन्ति मे सारिकाः।

(२) अयि चूतलतिके, त्वं तावत् गृहं प्रापय सारिकाः।

(३) तथा।

(४) अहमपि साधयामि।

(५) किमिति?

(६) अस्ति मे प्रयोजनविशेषः।

(७) अयि सुन्दरि, आवामपि गच्छावः।

(८) तिष्ठतु प्रियसखी, इयमहमागतैव।

(९) अयि कौमुदि, अलं विषादेन, आश्वस्तेदानीं भव।

कौमु । (निःश्वस्य) दूरग्रदो मे मणोरहो[१] ।

सुन्द । ण क्खु भअवदी अलीअं मन्तेदि[२] ।

कौमु । जाणामि एदं, भाअहेअं उण णोगच्छामि । तादो वा कधं मसइ[३] ?

सुन्द । मा संकेहि, तादोवि भअवदीमुहादो गहीदत्थो ण दे परिवन्थी होहिइ त्ति तक्केमि[४] ।

कौमु । ण क्खु अविणीदा अणुअम्पिज्जइ त्ति वेवइ मे हिअअं[५] ।

सुन्द । को उण इमस्सिं अविणओ ? णं वहीओ वि कुलकस्सआओ एव्वं अविणीदाओ सुणीअन्ति[६] ।

कौमु । परवदी क्खु अहं[७] ।

सुन्द । (सस्मितम्) ण क्खु सच्छन्ददो ज्जेव अज्जसुहाअरस्स अंकं आरूढा सि[८] ?

---

(१) दूरगतोमे मनोरथः ।

(२) न खलु भगवती अलीकं मन्त्रयति ।

(३) जानाम्येतत्, भागधेयं पुनर्नावगच्छामि । तातो वा कथं मन्यते ?

(४) मा शङ्कस्व, तातोऽपि भगवतीमुखाद्गृहीतार्थो न ते परिपन्थी भविष्यति इति तर्कयामि ।

(५) न खल्वविनीता अनुकम्प्यते इति वेपते मे हृदयम् ।

(६) कः पुनरत्राविनयः ? ननु वह्व्योऽपि कुलकन्यका एवमविनीताः श्रूयन्ते।

(७) परवती खल्वहम् ।

(८) न खलु स्वच्छन्दादेव आर्य्यसुधाकरस्याङ्कमारूढाऽसि ?

कौमु । (सासूयम्) अवेहि ण तुमए मन्तिस्सं[१] ।

सुन्द । जुज्जदि[२] ।

कौमु । (सरोषम्) किं इमम्मि जुज्जदि[३] ?

सुन्द । किमस्सं, अज्जसुहाअरेणमन्तेउं इच्छसि[४] ।

कौमु । एस तुह अप्पणो अहिलासानुरूवा कधा[५] ।

सुन्द । (सस्मितम्) पेक्खिवहिमु कस्स एव्वं अहिलासो । अधआ । पेक्खामो[६] ।

कौमु । (साशङ्कम्) हला सुन्दरि, अलाहि कीलिउण, पभवइ क्खु मे तादो । ता भअवदीसआसादो गेह्निदत्थस्स तादस्स कधं मुहं दंसेहिमि त्ति जं सच्चं विलीइअइ विअ मे हिंअअं[७] ।

सुन्द । पभवइ दे तादो सरीरमत्तस्स ण मणस्स ।

(१) अपेहि न त्वया मन्त्रयिष्ये ।

(२) युज्यते ।

(३) किमत्र युज्यते ?

(४) किमन्यत्, आर्य्यसुधाकरेण मन्त्रयितुमिच्छसि ।

(५) एषा तवात्मनोऽभिलाषानुरूपा कथा ।

(६) द्रक्ष्यामः कस्याएवमभिलाषः । अथवा । पश्यामः ।

(७) अयि सुन्दरि, अलं क्रीड़ित्वा । प्रभवति खलु मे तातः । तत् भगवतीसकाशाद्गृहीतार्थस्य तातस्य कथं मुखं दर्शयिष्यामि इति यत् सत्यं विलीयतइव मे हृदयम् ।

अविअ। अलीअसंकिदे, अणुरुववराहिलासां तुमं सुणिअ तादोवि संतुट्ठो होहिइ(१)।

(नेपथ्ये)

धूलीभिर्भृशमुत्थिताभिरभितः संच्छादयन् दिङ्मुखं
वृक्षाणामथ शुष्कपत्रनिवहं भूयः क्षिपन् धुक्षितः।
उच्चैरानमयंश्च तान् तृणचयं द्रागुत्क्षिपन् दूरतो-
वातोऽयं समुपस्थितो बहिरवस्थानान् जनान् पीड़यन्॥

(उभे वात्यावाधां रूपयतः)।

सुन्द। हला कोमइ, णादिसंणिहिदमन्तेउरं ता एहि उज्जाणमन्दिरं ज्जेव संस्सेम(२)।

कौमु। हला सुन्दरि, एव्वं करमु(३)।

सुन्द। इदो इदो पिअसही(४)। (उभे परिक्रामतः)।

सुन्द। इमं उज्जाणमन्दिरं पविसेदु पिअसही(५)।

(उभे प्रविशतः)।

(ततः प्रविशति सुधाकरः)।

(१) प्रभवति ते तातः शरीरमात्रस्य न मनसः। अपिच। अलीकशङ्किते, अनुरूपवराभिलाषां त्वां श्रुत्वा तातोऽपि सन्तुष्टो भविष्यति।

(२) अयि कौमुदि, नातिसन्निहितमन्तःपुरं, तदेहि उद्यानमन्दिरमेव संश्रयावः।

(३) अयि सुन्दरि, एवं कुर्व्वः।

(४) इतइतः प्रियसखी।

(५) इदमुद्यानमन्दिरं प्रविशतु प्रियसखी।

कौमु । (विलोक्य सभयम्) हला सुन्दरि, को णु क्खु अअं दीसइ[१] ?

(ततः प्रविशति सुधाकरः) ।

सुन्द । (उपसृत्य निरूप्य च स्वगतम्) कधं अज्जसुहाअरो ! होदु एव्वं दाव । (प्रकाशम्) को उण तुमं अणणुसाविअ एव्व कुलाअलाअणवीसाममन्दिरं पइट्ठो सि[२] ?

सुधा । (सविनयम्) आर्य्ये, सविधेन पथा सञ्चरन् वात्यावाधया निपीड़ितोऽभ्यर्णमिदं मन्दिरं प्रविष्टोऽस्मि । मर्षय तावदेतत् ।

सुन्द । (सहासम्) धिट्टो कुम्भीलओ वोलइ "मग्गभमादो आगदो" त्ति[३] ।

सुधा । आर्य्ये, नूनमहमपराधी, तथापि नैवं प्रतिपत्तुमर्हसि ।

सुन्द । (सस्मितम्) को संसओ, पुसदंसणो साहू क्खु

(१) अयि सुन्दरि, कोनु खल्वयं दृश्यते ?

(२) कथमार्य्यसुधाकरः ! भवतु एवं तावत् । कः पुनस्त्वमननुज्ञाप्यैव कुलाबलाजनविश्राममन्दिरं प्रविष्टोऽसि ?

(३) धृतः कुम्भिलकोवदति —"मार्गभ्रमादागतः"—इति ।

सि ! चिट्ठ दाव, जाव इमस्स साहुस्स वुत्तन्तं पिअ-
रस्स पुस्सकित्तिस्स णिवेदिस्सं[१] । (इति प्रस्थिता) ।

सुधा । अलमलमन्यथा सम्भाव्य । सुधाकरः खल्वहम् ।

कौमु । (सहर्षविस्मयमात्मगतम्) अम्म कधं सो ज्जेव महाभाओ[२] !

सुन्द । (ससम्भ्रमविनयमञ्जलिं बध्वा) अज्ज, जं ममाइ मूढ़ाइ अज्जे अविणओ किदो तं क्खमिदुं अरिहेइ अज्जो[३] ।

सुधा । न खल्वपराध्यति भवती । अधिकारोचितमनुष्ठितं भवत्या ।

कौमु । (स्वगतम्) अम्म ! उज्जुअत्तणं[४] ।

सुन्द । अणुग्गहीदा म्हि[५] ।

सुधा । मम तावदविनयं क्षन्तुमर्हसि ।

सुन्द । का उण अहं इमस्स खमाए । पिअसही मे

(१) कः संशयः, पुण्यदर्शनः साधुः खल्वसि ! तिष्ठ तावत्, यावदस्य साधोर्वृत्तान्तं पित्रे पुण्यकीर्त्तये निवेदयिष्यामि ।

(२) अहो कथं सएव महाभागः !

(३) आर्य्य, यन्मया मूढ़या आर्य्ये अविनयः कृतः, तत् क्षन्तुमर्हत्यार्य्यः ।

(४) अहो ऋजुकत्वम् !

(५) अनुगृहीताऽस्मि ।

कोमई एदस्स घरस्स सामिणी, णं खमेदुं अरिहइ अज्जो[१]। (इति कौमुदीमङ्गुल्या दर्शयति)।

सुधा। (उपसृत्य) मम तावद्भवती,

अविनयं क्षमतामनुकम्पया
प्रथममेतमनन्यगतेः कृतम्।
तनुभृतां शरणागतरक्षणं
ह्युपदिशन्ति महाव्रतमक्षयम्॥

(कौमुदी सलज्जमधोमुखी तिष्ठति)।

सुन्द। (बहिरवलोक्य ससम्भ्रमम्) इदो दाव कीलासारङ्गसिसुओ अहिहुइज्जइ दुट्ठसारमेएण, मोएमि दाव णं[२]। (इति प्रस्थिता)।

कौमु। मा निक्काम, एआइणी क्खु अहं[३]।

(इति सिचयाञ्चलमादाय वारयति)।

सुन्द। (सस्मितम्) कंदप्पदप्पहारी दे पुरदो चिट्ठदि[४]।

(१) का पुनरहमस्य क्षमायाम्। प्रियसखी मे कौमुदी एतस्य गृहस्य स्वामिनी, एनां क्षमयितुमर्हत्यार्यः।

(२) इतस्तावत् क्रीड़ासारङ्गशिशुकोऽभिभूयते दुष्टसारमेयेन, मोचयामि तावदेनम्।

(३) मा निष्काम, एकाकिनी खल्वहम्।

(४) कन्दर्पदर्पहारी ते पुरतस्तिष्ठति।

कौमु। (साशङ्कम्) अइ को[१] ?

सुन्द। णं भअवं भआणीपई[२]।

(इति शिवस्य चित्रपटमङ्गुल्या निर्दिश्य सिचयाञ्चलमाक्षिप्य निष्क्रान्ता)।

सुधा। (स्वगतम्) कुलाबला खल्वेषा न किमपि वक्ष्यति, मयाऽपि मनोगतमालपता शालीनत्वाय जलाञ्जलिर्दत्तो भवेत्, इति यत् सत्यमात्मनोऽपि लज्जे। (विचिन्त्य)। भवत्वेवं तावत्। (प्रकाशम्)। अयि भीरु,

परिहर विधुमुखि, शङ्कां प्रसन्नमद्य विधुमण्डलं भवतु।
उपरक्तोऽमृतरश्मिर्म्लपयति हि प्रकृतिसुभगोऽपि॥

(कौमुदी तथैवास्ते)।

सुधा। सुन्दरि, एवं चिन्ताम्लानमुखी न परमात्मानं यावदस्मानपि क्षणपरिचयप्रणयान् खेदयसि। पश्य,

क्षणमात्रप्रदृष्टाऽपि न कस्य कमलेक्षणे।
गन्धर्व्वनगरीव त्वं बाले, हरसि मानसम्॥

कौमु। (स्वगतम्) हिअअ, तह वाउलं हुविअ किं दाणिं मज्झत्थत्तणं ओलंबसि। लोअण, जं पेक्खिदुं

(१) अयि कः ?

(२) ननु भगवान् भवानीपतिः।

अदिमेत्तं उक्कंठसि, सो दे पुरदो चिट्ठदि, किं एह्लिं ण पेक्खसि(१) ?

सुधा । अयि व्रीड़िते,

नितान्तचिन्ताम्लपितन्तवेदं
मुखं निरानन्दकरं किलेन्दोः ।
मथ्नाति भूयो हृदयं मदीयं
साक्षात् परिम्लानमिवारविन्दम् ॥

कौमु । (स्वगतम्) सव्वं क्खु रमणिज्जं पेक्खइ महप्पा(२) ।

सुधा । (सविषादमात्मगतम्) किं नु खल्विदम् ! (विचिन्त्य) यद्भवति तद्भवतु, न पुनरात्मनो विज्ञापनाऽवसरं विफलयिष्ये । (प्रकाशम्) कल्याणि, न खल्वयं जनो-वाङ्मात्रेणापि न पुनः सम्भावनाऽर्हः । न खल्वा-त्मनः प्रभवामि, अत इदं ब्रवीमि । श्रूयतां भूतार्थः,

वेगेन प्रबलेन यस्तु हृदयं संप्लावयत्युत्सुकं
यश्चोन्मूलयति क्षणेन नितरामप्यात्मनः संयमम् ।
यः खल्वन्धयते विमोहयति वा सोऽयं दशात्ययो-
मामुच्चैरधुना करोति यदिदं वाग्भिः कथं कथ्यते ॥

---

(१) हृदय, तथा व्याकुलं भूत्वा किमिदानीं मध्यस्थत्वमवलम्बसे ? लोचन, यं प्रेक्षितुमतिमात्रमुत्कण्ठसे, स ते पुरतस्तिष्ठति, कि-मिदानीं न प्रेक्षसे ?

(२) सर्व्वं खलु रमणीयं प्रेक्षते महात्मा ।

कौमु। (स्वगतम्) किं णु क्खु एदं होज्जउ; किं अणुवआरसंहओ मसू अअं, उद जह मे मणस्स अहिलासो त्ति जं सचं इमिणा अप्फुडाक्खरेण वअणेण वेवदि मे हिअअं(१)।

सुधा। धिक्कष्टं व्रीड़ितोऽस्मि। (कौमुदीं प्रति) सुतनु, विवेकमूढ़ेण मया एवमभिहितं, न पुनरेवं श्रोष्यसि। तथाप्युद्भिन्नः प्रवाहो न शक्यः सहसा नियमयितुम्, तद्भद्रमभद्रं वा भवतु, अनुग्रहेण श्रूयतां तावत् पश्चिमं वचः सुधाकरस्य। (निःश्वस्य)।

त्वमेका कल्याणी विधुमुखि, मनो मे प्रियतया
विलोलं त्वय्युच्चैर्विशति परिलुप्तान्यविषयम्।
मम त्वं न स्या वा तव तु सुकुमाराङ्गि, नितरां
विनाऽप्यर्थोत्सर्गं कलय खलु दासोऽयमबले॥

अविनयन्तु सुधाकरान्मा शङ्किष्ठाः। अहं हि,

वृथा मनोरथक्लिष्टस्त्यक्षेयमपि जीवितम्।
न खल्वविनयं कुर्य्यां त्वयि वा दोषभावनाम्॥

स्वस्ति भवत्यै। अनुमन्यस्व तावत्, गच्छामोऽपुनर्दर्शनाय। (इति प्रस्थितः)।

---

(१) किं नु खल्विदं भवेत्; किमनुपचारसम्भवो मन्युरयं, उत यथा मे मनसोऽभिलाषः इति यत्सत्यमनेनास्फुटाक्षरेण वचनेन वेपते मे हृदयम्।

कौमु । (स्वगतम्) हद्धी हद्धी! इमं सुणिअ ण मे धिई अत्थि, किं दाणिं कुणमि । होदु, अदिधिववदेसं ओलं-विस्सं । (प्रकाशम्) मरिसेउ मरिसेउ महाभाओ[१] ।

सुधा । (पदान्तरे प्रतिनिवृत्त्य) एषोऽस्मि ।

कौमु । समाअराणहिण्णो खमिदुं अरिहो लज्जावर-असो कुलकण्णआअणो । दआलुणो क्खु अदिधि-विसेसा होन्ति[२] ।

सुधा । (स्वगतम्) कथमतिथिधर्म मय्याश्रयति । (प्रकाशम्) मा मैवम् । आभाषणमपि ते समादरपक्षे वर्त्तते ।

कौमु । तह वि उवआरविमुही अवरद्धा म्हि महा-भाअस्स मंदभाइणी[३] ।

सुधा । सुन्दरि, अलमलमनेन । अतिमात्रं खल्वह-मुपचरितस्त्वया । मया खलु तव,

वचनामृतमपि पीतं निर्वर्णितमाननं समाघ्रातः ।
सुरभिमनोहरगन्धो वरतनु, कोमलशरीरस्य ॥

(कौमुदी सव्रीडाऽधोमुखी तिष्ठति) ।

---

(१) हा धिक् हा धिक् ! इदं श्रुत्वा न मे धृतिरस्ति, किमिदानीं करोमि । भवतु अतिथिव्यपदेशमवलम्बिष्ये । मर्षयतु मर्षयतु महाभागः ।

(२) समादरानभिज्ञः क्षन्तुमर्हो लज्जापरवशः कुलकन्यकाजनः । दया-लवः खल्वतिथिविशेषा भवन्ति ।

(३) तथाप्युपचारविमुखी अपराद्धाऽस्मि महाभागस्य मन्दभागिनी ।

(नेपथ्ये)

भोः भोः अस्मदीया लोकाः,

उपप्लवाद्दातकृतात् परस्ता-
न्न कौमुदीं प्रेक्ष्य विहस्तितौ स्तः ।
उच्चैस्तरां तत्पितरौ, कुतः सा ?
ब्रूताधुना तिष्ठति चेन्मता वः ॥

कौमु । (आकर्ण्यात्मगतम्) हद्धी हद्धी, मह एव्व अण्णेसणा वट्टइ । हि अअ, अलीअलज्जिअ, किं दाणिं परितप्पसि ? सहस्सु लज्जादुव्विणअं[१] ।

(ततः प्रविशति सम्भ्रान्ता सुन्दरी)

सुन्द । हला कोमइ, एहि गच्छामो, अज्जो हारिअओ तुमं मग्गेअन्तो इदो ज्जेव्व आगच्छदि, विण्णवेहि दाव महाभाअं, उक्कंठिआ पिअरा[२] ।

(कौमुदी विषण्णा तूष्णीमास्ते) ।

सुन्द । महाभाअ, कोमई विण्णवेदि ; इच्छामि महाभाएण अव्भणुण्णादा पिअरे पेक्खिदुं त्ति[३] ।

(१) हा धिक् हा धिक् ! ममैवान्वेषणा वर्त्तते । हृदय, अलीकलज्जित, किमिदानीं परितप्यसे ? सहस्व लज्जादुर्विनयम् ।

(२) अयि कौमुदि, एहि गच्छावः, आर्य्यो हारितकस्त्वां मार्गयन्नितएवागच्छति । विज्ञापय तावन्महाभागं, उत्कण्ठितौ पितरौ ।

(३) महाभाग, कौमुदी विज्ञापयति इच्छामि महाभागेनाभ्यनुज्ञाता पितरौ प्रेक्षितुमिति ।

(इति ब्रुवत्येव सुधाकरमवलोकयन्तीं कौमुदीमादाय निष्क्रान्ता ।)

**सुधा ।** (निःश्वस्य) **गतं लोचनमधु । तत् किमद्य करोमि मन्दभाग्यः । (विभाव्य) अहो सन्देहाकुला कामिजनमनोवृत्तिः ।**

**मम हि,**

विलोक्य चिह्नान्यपि नानुरागं
प्रत्येति चित्तं मृगलोचनायाः ।
न्यायैरिवार्थं स्वयमभ्युपेतम्
आभासशून्यैरपि तत्त्ववाचः ॥

**अपिच,**

संवादवशाल्लोकः प्रत्येति स्वयमवधृतभूतार्थम् ।
मम खलु मनसस्तर्कः शिथिलस्तस्याः स्फुटोक्तिविरहेण ॥

**यावदिमं वृत्तान्तं वयस्यसालङ्कायनं विज्ञापयिष्ये । स वा किं मन्यते ।** (परिक्रामन् साशंसम्)

आशंसापरिकल्पितेऽपिच मनो यत्रामृतैः प्लाव्यते
यल्लोभात् किल पूर्व्वदेवनिवहैः पीयूषमप्युज्झितम् ।
तन्मुग्धेक्षणलक्षणं स्मितकथं भावार्द्रचेष्टोत्तरं
स्वर्गादप्यभिराममेणनयनाप्रेमास्तु नित्यं मयि ॥

(इति निष्क्रान्तः) ।

इति कौमुदीसुधाकरे द्वितीयोऽङ्कः ॥

## तृतीयोऽङ्कः।



(ततः प्रविशति भीषणावेशोज्ज्वला कङ्कालमालिनी।

कङ्काला। बलमिति खलु पाशं यां वदन्ति प्रवीणाः
परमपुरुषतत्त्वं या तिरोधत्तएव।
पशुकुलमनुगृह्य प्राज्यरूपा शिवा नो-
वितरतु शिवमेषा रोधशक्तिः शिवस्य॥

अपिच,

पद्मेऽधोविलसत्सहस्रदलके कर्पूरगौरोज्ज्वले
यो राजत्यनुशक्ति मुक्तमधुरश्चक्रे द्विषट्के तथा।
भित्त्वा तानि सरोरुहाणि च महाचक्रे परस्मिन् पुनः
सोऽयं पाशविमोचणेन परमोदेवः शिवत्वं क्रियात्॥

अपिच,

स्वतन्त्रो यस्तावत् सकलकरणानामविरतं
प्रयोक्ता कर्म्मादि प्रभुरपि सदाऽपेक्षतइह।
स्वयं कर्त्ता साक्षात् स खलु परिशुद्धाध्वविषयेऽ-
हिते मार्गेऽनन्तादिभिरिति विभोः कोऽपि महिमा॥

(गतानुगतिकान् लोकानवलोक्य)

अहो पशूनां मतिवैपरीत्यम्! प्रायेण विषयानेव सेव-
मानाः केचित् पुनर्दुराचार्य्यचातुर्य्यवञ्चितत्वा-

इनाहृतमाहेश्वरसिद्धान्ताः क्लिश्यन्ते। एतेषु किल,

सकलाः प्रायशो लोका ये केचित् प्रलयाकलाः।
तेऽपि पुर्य्यष्टकैः कष्टं संसरन्ति पुनः पुनः॥

कालेन भगवान् पशुपतिरेव अबोधविक्लवेभ्यः स्वस्ति करिष्यति। (विचिन्त्य सविस्मयम्) अहो प्रभावातिशयोऽस्मद्गुरोः कापालिककुलभूषणस्य भगवतः खण्डमुण्डस्य। यदत्रभवतः कृपयैव असम्यग्योगचर्य्ययाऽपि मया कतिपयैरेव दिवसैः समासादिता खेचरी सिद्धिः। (विमृश्य) गुरुर्हि नाम भगवतः पशुपतेरेव मूर्त्त्यन्तरम्।

तथाहि,

परिपक्वमलानणून् भवाब्धेः
स्वयमुद्धर्त्तुमनाः पतिः पशूनाम्।
गुरुमूर्त्तिगतो दिशत्यमोघं
करुणावारिनिधिः शिवत्वबीजम्॥

सर्व्वथा नमः शिष्यजनकल्पतरुभ्यो दुर्गतशरणेभ्योऽस्मद्गुरुचरणेभ्यः। (इति प्रणमति)।

(त्वरां विभाव्य) गुरुदक्षिणार्थमुपच्छन्दितेन गुरुणा किलैवमादिष्टाऽस्मि; शरावतीपुरनिवासिनः पुण्यकीर्त्ते

स्तनयां कौमुदीं सुन्दरीद्वितीयामपहृत्य तुङ्गपर्व्वतं नीत्वा संयम्य रक्षस्व, ततो मया अमावस्यायां तत्र गत्वा अनन्तरकरणीयं करिष्यते,—इति। सा खलु कौमुदी सर्व्वलक्षणोपेता कुमारीत्यस्मद्गुरोर्मन्त्र-सिद्धये चामुण्डोपहारो भविष्यति। सुन्दर्य्यपि तप-स्विनी गुरुं प्रतिकूलयमाना चामुण्डोपहारतामेव प्रतिपन्ना। अपिचैतयोः करणात् सालङ्कायनेन बटुना असकृदधिक्षिप्ता गुरवः, अचिरनिवृत्ता-याञ्च परिव्राजकानां संसदि महान्तं परिभावं प्रापिताः। तन्मयाऽप्यवश्यं गुरूणां प्रियकार्य्यमनु-ष्ठास्यते। श्रूयते च, शङ्करया प्रोत्साहितः पुण्यकी-र्त्तिर्नातिचिरात् सुधाकराय कौमुदीं दास्यति,—इति। (स्मृत्वा) अद्य किल चतुर्द्दशी। तदुपस्थितः कार्य्यकालोऽस्माकम्।

(नेपथ्ये गीयते)।

ओसिअणिअमिअकज्जो जत्ताहुत्तो महेसरो सिरिमा।
पेक्खह सुहिओ लोआ परलोअं तरह वीअभया(१)॥

कङ्का। (कर्णं दत्त्वा) अये! इयं भगवतः खण्डपरशोर्याचा-

---

(१) अवसितनियमितकार्य्यो यात्राऽभिमुखो महेश्वरः श्रीमान्।
पश्यत सुधियो लोकाः परलोकं तरत वीतभयाः॥

प्रवृत्तलोकानां प्रावेशिकी ध्रुवा। (विमृश्य) अमुना-वावसरेण गुर्व्वादेशकरणेनात्मानं कृतार्थीकरिष्ये। (इति परिक्रामति । अग्रतोऽवलोक्य) कः पुनरयमितएवा-गच्छति ? (पुनरवलोक्य अनिरूपणां नाटयन्ती) एष खलु दूरा-दनालक्ष्यव्यक्तिः। (विभाव्य सावज्ञम्) भवतु किमनेन, गुर्व्वादेशमिदानीमनुतिष्ठामि । (इति परिक्रम्यान्यतो-निष्क्रान्ता) ।

विष्कम्भकः ।

(ततः प्रविशति सुधाकरः) ।

सुधा। उपदिष्टोऽस्मि भगवत्या शङ्करया ; अद्य किल कस्याप्यमङ्गलस्य प्रतिहतये तुङ्गपर्व्वतं गच्छता त्वया यापयितव्योदिवसः,—इति । (विचिन्त्य निःश्वस्य) पापः किल खण्डमुण्डो न मे कौमुदीलाभं सहते। (विभाव्य) अहो परसौभाग्यसन्तप्यमानानां पौरोभाग्यं दुर्ज्जनानाम्।

तथाहि,

रोदस्योरन्तरालं ज्वलयति तरणौ द्रष्टुमस्योज्ज्वलत्वं<br>
नालं लेशादुलूकः शतशइव पुनर्दीर्य्यते चक्षुरस्य ।<br>
पीयूषप्रायमुच्चैर्मदयति हृदयं ज्योतिरिन्दोर्जनानां<br>
तत्संपश्यन् मृगाङ्कोमणिरपि नितरां रोदिति प्राप्तदैन्यः ॥

अथवा, सिद्ध्यति खलु शिष्यायैव मह्यं भगवती परिव्राजिका, सर्व्वथा सैव नः स्वस्ति करिष्यति। यतः,

मूर्त्तइव पापराशिर्विजृम्भते तावदन्धकारोऽयम्।
यावन्नोदेति प्रभा जगत्युषाऽऽलोकसर्व्वस्वम् ॥

अपिच,

सौदामन्यां ज्वलन्त्यां न खलु परिभवत्यध्वगव्रातचक्षुः
कामं घोरान्धकारो जलधरपटलैरप्यकाण्डे प्रवृद्धः।
दूरादालोक्यते यः सकलजनगणैः सोऽपि वह्निर्न तावत्
ज्वालामालाऽवलीढ़ः प्रतपति तपने ज्योतिराविष्करोति ॥

(विचिन्त्य) कैव शक्तिः कापालिकापसदस्य भगवती-महिमानमतिशयितुम्। कुतः?

अत्युन्नतोऽपि सन्नद्धो भूयानपि बलाहकः।
महत्या जातु वात्याया वेगमत्येतुमक्षमः ॥

तत् अलमस्य दुष्टकापालिकस्य कथया मनसः खेद-मुत्पाद्य। (अवलोक्य) कथमेते वयमुपत्यकां भूमिं सम्प्राप्ताः! चिन्ताऽऽकुलत्वात्तु मनसा न पुनरुपलक्षितम्। (निरूप्य) अहो रामणीयकमुपत्यकायाः।

तथाहि,

इतः कुञ्जं गुञ्जद्विलसदलिपुञ्जं विकसितै-
रितोव्याप्तं मुक्ताफलवलयशोभैर्विटपिभिः।

इतः शस्यश्यामा स्थलकमलजालैरुपचिता
स्थली ताराव्रातैरिव रजनिरालक्ष्यतइह ॥

(मेघगर्ज्जितं सूचयित्वा) एष स्तनयित्नुनिर्घोषः शिलोच्चय-विजृम्भितप्रतिशब्दमांसलो भूयसीं वृद्धिमुपगतः । (सस्मितम्) तदेतदुच्चैःशिरसां सन्निकर्षमाहात्म्यम् ! (अग्रतोऽवलोक्य, सविस्मयम्) किन्नु खल्वेतत्? (विचिन्त्य) आं ज्ञातम् । मेघशब्दात् रत्नशलाकाः समुद्भिन्नाः । मन्ये च रत्नशलाकाच्छलेन,

एषा विदूरभूमिर्घनस्य शब्देन चाटुकारस्य ।
मधुरं रसमिच्छन्ती मुग्धा पुलकोद्गमं वहति ॥

(अन्यतोऽवलोक्य) रमणीयं खल्वितोवर्त्तते !

भूयः पक्वमरीचराशयइमे श्यामस्थलीसङ्गताः
लक्ष्यन्ते शुकचञ्चुशोदररुचः सान्द्रेन्द्रगोपाइव ।

(अपरतोदृष्ट्वा) चित्रमितोभ्रमराणां रञ्चनाप्रकारः !

गम्भीरन्धतया विवेकविधुराः सर्पद्भिरुच्चैर्दिशो-
यातव्येषु जड़ा विमूढ़मनसो भ्राम्यन्ति भृङ्गाअमी ॥

(पुनरन्यतोऽवलोक्य) अयमितस्तपोवनाभोगः । तथाह्यत्र,

नीवाराणां वलिभिरधिकप्रेक्षणीया स्थलीयं
स्तोकोन्नेया मलिनरुचयः पल्लवा होमधूमैः ।

लुप्तातङ्कैर्मृगवृकमुखैरालवालीयमम्भः
सत्वैस्तत्त्वं मुनिभिरिव सम्पीयते प्रत्ययेन ॥

अपिच ।

प्रत्यग्रवल्कलस्यन्दिकषायरसविन्दुभिः ।
अलङ्कृता स्थली भाति ताराभिर्द्यौरिवाचिता ॥

(अनिलस्पर्शमाघ्रायाद्य रूपयित्वा) **अहो पवित्रता तपोवनस्य ।**

हव्यगन्धशुचिभिः समीरणैः
केवलं न खलु मे कलेवरम् ॥
आन्तरोऽपि पुरुषोमलात्यया-
न्नूनमेष लघिमानमश्नुते ॥

(परिक्रम्यावलोक्य) **अयभारात्तुङ्गपर्व्वतः । यएषः,**

सत्वानां रचितोच्चैर्विनयनयजुषान्तापसैरिष्यमाणो-
मुक्ताजालैरनल्पैर्वकुलमणिमयैः क्लृप्तनेपथ्यशोभः ।
उच्चैर्मूर्द्धा सशारो गुरुतरधरणीभारवोढा विषोढा
साक्षाद्गाढाक्रमानामवनिपतिरिव प्रोज्ज्वलस्तेजसैव ॥

(निरूप्य) **अहोदर्शनीयता इतः शिलोच्चयस्य ।**

प्रांशुर्नव्यक्तसन्धिर्मरकतरुचिरो निर्झरोद्गाररम्यः
कस्तूरीलिप्तदेहो नृपतिरिव लसद्धौतवस्त्रोत्तरीयः ।
व्यालम्बालोलहारो वुधइव गगनं व्योमगङ्गाम्भसेव
स्कन्धासक्तं मृणालं गजइव विपुलं विभ्रदभ्रंलिहोऽयम् ॥

(इतिपरिक्रामति) **अयं तुङ्गपर्व्वतः। यावदधिरोहामि।**

(इति नाट्येनाधिरोहति)। (अधस्तादवलोक्य) अन्यैवास्मात् स्थानात् प्रेक्षणीयता जीवलोकस्य ।

सूक्ष्मं क्वापि विलीनमल्पमभवत् स्थूलं मुहुश्चञ्चलं
संप्राप्तं स्थिरतामतीव नितरामायामवत् खर्व्वताम् ।
प्रायोऽहन्त समस्तवस्तुविषया भिन्नेव जाता स्थिति-
र्लोकानामनवस्थतां स्फुटयति व्यक्तं महत्संश्रयः ॥

(परिक्रम्यावलोक्य च) किं नु खल्वेतदल्पमपि परिमाणत उपचीयमानमिव स्निग्धमधुरकमनीयेन रोचिषा बालइव कुमुदबन्धुरानन्दयति मे हृदयम्? (निरूप्य) अये मुद्रिकेयम्! (सवितर्कम्) कुतः पुनरस्मिन् तपस्विजननिवासयोग्ये प्रदेशे सम्भवोऽस्य नरपतिकुलान्वेषणीयस्य रत्नस्य? (विमृश्य) अथवा। देवभूमयः खल्वेवमादयः प्रदेशाः। तत्सर्व्वमुपपन्नम्। नूनमलौकिकेनानेन रत्नेन भवितव्यम्। (क्षणं तूष्णीं स्थित्वा) भवतु, किमनेन। न खल्वनात्मीयं वस्तु अस्मद्विधैर्ग्रहणमर्हति। (इति प्रस्थितः)।

(नेपथ्ये)।

मनोरथानामुपपादयित्री
महातपःसिद्धिरिवाचिरेण ।
प्रगृह्यतां मङ्गलमुद्रिकेय-
मुपस्थिता दैववशादमोघा ॥

सुधा। (आकर्ण्य) कः पुनरयममृतमयेन वचसा बन्धुरिव मङ्गलमस्मदीयमभिलिप्सुर्मुद्राग्रहणाय मामनुशास्ति? (विभाव्य) नूनमनेन केनापि देवयोनिना भवितव्यम्। भवतु, गृह्णामि। (इति ग्रहणं नाटयति)। (दिशोऽवलोक्य) रमणीयः खल्वयं शैलः।

दरी विपुलितान्तरा जलदखण्डरुद्धा मुखे
वनेचरवधूजनः सहजचारुभावोज्ज्वलः।
महौषधिमयी स्थली प्रचुरकीचकानां रवः
सगैरिकमनःशिलाच्छुरितरम्यरत्नोपलः॥

यत्सत्यं हृतइवास्मि संवृत्तो महीध्रसुषमाभिः। तथाहि,

यदृच्छातश्चक्षुर्विनिपतति यत्रैव विषये
सएवाबध्नाति प्रथममिव दृष्टः पुनरपि।
शरच्चन्द्रं लोकोमुहुरपिच पश्यन्न भवति
प्रहृष्टो वस्तूनां प्रकृतिमधुराणां स्थितिरियम्॥

(इति परिक्रामति)।

(सवितर्कम्) कथमीदृशेऽपि रमणीये प्रदेशे उत्कण्ठाभूयिष्ठो ममान्तरात्मा नीहारनिमग्नइव चन्द्रमा न प्रसीदति? (इति चिन्तां नाटयति)।

(नेपथ्ये गीयते)।

रमणीयोऽप्युपचारो ग्लपयति हृदयं वियोगविधुराणाम्।

वर्षति चामृतमिन्दौ ग्लायति तावद्दिवाकरग्रावा ॥

सुधा। (कर्णं दत्त्वा) अये किम्पुरुषाणामियं गीतिः। (विभाव्य) अवितथमेव गीतं तुरङ्गमुखैः। कौमुदीविरहएव मनोमे विधुरयति। (सविषादम्) अनुपक्रम्योऽयमातङ्कः। केवलं सैव वरोरुरच प्रभवति, सप्रतिबन्धश्चायमर्थः। सर्व्वथा धिग्भागधेयमस्माकम्। (निःश्वस्य) प्ररूढ़ोऽप्ययमर्थो न पुनरभिव्यक्तः। तथाहि,

अधिचकार सुधांशुमुखी मनः
स्फुरति च द्युनिशं हृदयान्तरे।
सुनिपुणैर्मतिमद्भिरगादयो
तड़िद्विवेकरसैरनुमेयताम् ॥

(विचिन्त्य) अपूर्व्वः खलु प्रकारः प्रहरतो मकरकेतनस्य। यतः,

अस्त्रं धनुः पुष्पमयं गुणोऽपि
भृङ्गावली चारुसखोवसन्तः।
निमित्तमेणीनयनाभिरामा
रामाऽचिरात् प्राणभृतः शरव्यम् ॥

स्थाने खलु सर्व्वेषां धनुष्मतां प्रत्यादेशक्षमो महिमा मनोजन्मनः। यदसौ तर्ज्जितप्रलयकालकेतुविकट-

भ्रुकुटीकरालमुखस्य भगवतो धूर्जटेर्ललाटलोचन-सम्भवज्वलनभस्मीकृतोऽपि,

मृदुलमृदुलपक्षः केवलं पुष्पधन्वा
सुरनरदनुजादिं त्रिष्वहो पिष्टपेषु ।
युगपदहतलक्ष्यः कामिलोकं क्षणेन
प्रतिहतपरिपन्थी पञ्चबाणः क्षिणोति ॥

(विभाव्य) अपिनामैवमप्युपतप्य कदाचिदमुनैवोपायेन सुखयेदस्मान् कुसुमायुधः ?

(सप्रत्याशम्)

सन्तप्यान्ते मुहुरपि विधिर्भूयसा मङ्गलेन
निःसन्दिग्धं सुखयति पुनः किन्तु कालेऽनुकूलः ।
दग्ध्वा ग्रीष्मे ज्वलनकणिकानिर्विशेषैर्मयूखैः
प्रावृष्यद्भिः प्रचुरमरुणोजीवलोकं धिणोति ॥

(परिक्रम्यावलोक्य) अये अन्तरा वनधारं लतामण्डपइव दृश्यते । (भूयः परिक्रम्य निरूप्य च) कथं सत्यमेव लतामण्डपः ! पल्लवभूयिष्ठानां विटपिनां निविड़तरैः सन्निवेशैरन्धकारितइवायं प्रदेशः । यावदुपसर्पामि ।

(इति परिक्रामति) ।

(ततः प्रविशति लतामण्डपमध्यगता लतापाशसंयमितकरचरणा मूर्च्छिता कौमुदी) ।

सुधा । (उपसृत्यावलोक्य साश्चर्य्यम्) अये नूनमियं विद्याधर-

दारिका सुखस्वप्नमनुभवति। (निरूप्य सविस्मयम्) कथ-मियं संयमितकरचरणा! अहह!

अम्लानमालतीमालां निर्मलामोदनिर्भराम् ।
सन्तर्पणकरीमक्ष्णोरस्मद्वात् कोनु दुर्मतिः? ॥

(सवितर्कम्) अपिनाम असुरस्य निशाचरस्य वा कस्य-चित् नैष्ठुर्य्यविलसितमेतत्स्यात्? (विभाव्य) अथवा, कः सन्देहः ।

लालनीयां सहस्रांशोः करैरादरकोमलैः ।
कोऽन्यः कमलिनीं हन्यादृते मत्तमतङ्गजात् ॥

मोचयामि तावदेनाम्। असाम्प्रतं खल्वापन्नं जनमु-पेक्ष्य गन्तुम् । (नाट्येन प्रविश्यावलोक्य ससम्भ्रमम्) कथमियं मूर्च्छिता! यावदुपचरामि । (इति नाट्येन मोचयित्वा वीज-नादिनोपचरति)। (सौत्सुकमात्मगतम्)

विद्याधराणां ध्रुवमन्ववाया-
दिदं मनोहारि बभूव रूपम् ।
स्निग्धं प्रभामण्डलमिन्दुविम्बा-
दाप्यायनं न स्फुरतीतरस्मात् ॥

अपिच,

शैलादेव प्रगुणितजलाः सम्भवन्तीह नद्यो-
मुक्तारत्नं सरिदधिपतेस्ताम्रपर्णीसमेतात् ।
ओषध्योऽपि ज्वलितसुभगस्निग्धभासो हिमाद्रौ

कादम्बिन्यां लसति चपला व्योम्नि ताराः स्फुरन्ति ॥

(सखेदम्) **महता खल्वत्रभवती मोहेन कवलिता । इयं हि,**

निष्पन्दसर्व्वकरणा वपुषा सुकुमारकान्तिमा भाति ।
जीवन्यासात् पूर्व्वं नारायणसम्भवा वरोरुरिव ॥

(निरूप्य) **अहो कष्टम्! कथं वेपते! न पुनरुपलक्षितं मया ।**

पयोधरप्रकम्पोऽस्या नाधुनाऽप्युपशाम्यति ।
शान्तेऽप्यत्याहिते भाति लोकस्य भयवेपथुः ॥

**अकथितमपि ज्ञायतएवात्रभवत्या महदत्याहितम् । तथाहि,**

न विद्यते यद्यपि चेतनाऽस्या-
स्तथापि गाढ़ो वपुषः प्रकम्पः ।
उपप्लवं सूचयति प्रकामं
साचादिवान्तर्व्वलवन्तमुर्व्वरा: ॥

(विभाव्य) **अहो सौकुमार्य्यम्!**

इयं पराभिषङ्गेन मथिताऽपि कृशोदरी ।
म्लाना न लक्ष्यते दिव्या मालेवातपतापिता ॥

अपिच,

चित्रं काचैरपिहितमिव ज्योतिषा राचिवन्धो-
रथ्याच्छन्नं सरसिजमिव ग्रस्तवच्चन्द्रविम्बम् ।

अस्या रूपं हरति हि मनोमुग्धमप्युत्पलाक्ष्याः
कैवावस्था प्रकृतिमधुरं वस्तु नालङ्करोति ॥

(इति सस्पृहमीक्षते)। (समीक्ष्य सवितर्कम्) कथमियं दृष्टपूर्व्वेवाभाति। प्रावृतत्वात्तु प्रदेशस्य न पुनः सम्यगुपलक्षयामि। निरूपयामि तावत्। (निपुणं निरूप्य) कथं कौमुदी! (इति मूर्च्छति)। (क्षणान्तरे संज्ञां लब्ध्वा) धिक्कष्टम्! नूनं तस्यैव कापालिकापसदस्य क्रौर्य्यमिदं विजृम्भते। (इति सोद्वेगमुपचरति)।

(कौमुदी प्रत्यागच्छति।

सुधा। (विलोक्य सहर्षमात्मगतम्) दिष्ट्या वर्द्धामहे!

धूमस्यान्ते शिखाऽग्नेरिव विमलतरा स्वैरमाविर्भवन्ती
मेघैरारिच्यमाना स्फुरदमलरुचिश्चन्द्रिकेव प्रसन्ना।
कुम्भोद्भूतोदयान्ते सरिदिव कलुषा प्राप्तकल्पा प्रसादं
मोहेनान्तर्वरोरुर्ध्रुवमियमधुना मुच्यमानत्वमेति ॥

कथं घनान्धकारितायां रात्रौ प्रातर्हृदमिव ज्योतिरस्मिन् गिरिकान्तारे वाङ्मनसयोराह्लादनं रत्नमुपलब्धम्!

(कौमुदी लब्धसंज्ञा त्रासं रूपयति)।

सुधा। महाभागे, समाश्वसिहि समाश्वसिहि।

अलं भिया भीरु! परो न विद्यते
पुरः स्थितो दासजनोऽयमस्ति ते।

ततः परित्यज्य पराभिषङ्गजं
भयं समुन्मीलय नेत्रपङ्कजम् ॥

कौमु। (कण्ठस्वरेण सुधाकरं प्रत्यभिज्ञाय सहर्षमात्मागतम्) अम्म! कधं सोएव्व महाभाओ, उवकिदं क्खु मे हदासाए। जं सच्चं मेहमालान्तरिओ वि दिणअरो पआसेइ लोअं। किं एत्थ करणिज्जं त्ति ण क्खु अहिगच्छामि। (विचिन्त्य) होदु एव्वं दाव। (उन्मील्य चक्षुषी) ण क्खु सम्मउवलक्खेमि, किणाउण आवण्णाणुकम्पिणा पिअंवदेण महाभाएणव्भुववण्णा म्हि[१]।

सुधा। महाभागे, ज्ञास्यसि। प्रकृतिं तावत्प्रतिपद्यस्व। बलवत् खलु परित्रस्ताऽसि। तव हि,

मुक्तमपि प्रलयेन प्रकृतिं नापद्यते करणमेतत्।
झञ्झावात्याऽपाये तोयमिवोद्वेलितं नद्याः॥

(कौमुदी तूष्णीमास्ते)।

सुधा। अपि प्रकृतिमापन्ना ते तनुः?

कौमु। आं अत्थि कवि विसेसो[२]।

(१) अम्म! कथं सएव महाभागः। उपकृतं खलु मे हताशया। यत् सत्यं मेघमालाऽन्तरितोऽपि दिनकरः प्रकाशयति लोकम्। किमत्र करणीयमिति न खल्वधिगच्छामि। भवत्वेवं तावत्। न खलु सम्यगुपलक्षयामि, केन पुनरापन्नानुकम्पिना प्रियंवदेन महाभागेनाभ्युपपन्नाऽस्मि?

(२) आं अस्ति कश्चिद्विशेषः।

(कौमुदी सस्पृहं सुधाकरमीक्षते) ।

सुधा । (सहर्षमात्मगतम्)· हृदय, समाश्वसिहि । इयं हि,

कलुषाऽप्यभिषङ्गेण मया नूनं प्रसीदति ।
तमसा परिपृक्ताऽपि शर्व्वरीवोदितेन्दुना ॥

(प्रकाशम्) कल्याणि, उत्तिष्ठ तावत् । क्लिश्यते खल्वस्यामनास्तृतायां भूमौ शयानं कुसुमसुकुमारन्ते शरीरम् ।

कौमु । नाहं सक्का[१] ।

सुधा । अलं विषादेन । नन्वयमेव दासजनस्ते परिजनभूमौ वर्त्तते ।

(इति कौमुदीं हस्ते गृहीत्वोत्थाप्य स्पर्शसुखं रूपयन् सहर्षमात्मगतम्) ।

इयमानन्दनिस्यन्दमकरन्दमयी तनुः ।
निर्वृतं स्पर्शमात्रेण यस्या बाह्यमिवान्तरम् ॥

कौमु । (प्रत्यभिज्ञां रूपयित्वा लज्जां नाटयन्ती) कधं उण महाभाओ अमुं अगम्मं पदेशं आअदो ? साअदं महाभाअस्स[२] ?

सुधा । स्वागतमिदानीं संवृत्तम् ।

(१) नाहं शक्ता ।

(२) कथं पुनर्महाभागोऽमुमगम्यं प्रदेशं आगतः ? स्वागतं महाभागस्य ?

विलोकनेनैव मुखाम्बुजस्य ते
कृतार्थमात्मानमवैत्ययं जनः
चिराभिलाषैः किमुतोपचारकै-
रहोवतास्मत्सुकृतैर्विजृम्भितम् ॥

कौमु। (सव्रीड़मात्मगतम्) अमिअं क्खु दे वअणं। (सस्मितम्) अधआ, सुहाअरादो किं अवरं सुहाए[१] ?

सुधा। कथय, कोऽयमनार्य्यः, यस्त्वय्यपि कुसुमसुकुमारायां न दयते ?

कौमु। पकिदित्था कहेस्सं[२]।

सुधा। तेन हि रमणीयतरं प्रदेशं गच्छावः। यत्र नातिचिरात् प्रकृतिं प्रतिपत्स्यसे। (इति हस्ते गृहीत्वा परिक्रामति)।

कौमु। (स्पर्शसुखं रूपयन्ती स्वगतम्) हिअअ, किं दाणिं पि तम्मसि ? (प्रकाशम्) महाभाअ, अलाहि परिस्समेण, सक्का क्खु अहं परिक्कमिदुं। ता मुंचदु मे पाणिं महाभाओ[३]।

(१) अमृतं खलु ते वचनम्। अथवा, सुधाकरात् किमपरं सुधायाः ?

(२) प्रकृतिस्था कथयिष्यामि।

(३) हृदय, किमिदानीमपि ताम्यसि। महाभाग, अलं परिश्रमेण, शक्ता खल्वहं परिक्रमितुं, तन्मुञ्चतु मे पाणिं महाभागः।

**सुधा। अयि भीरु, अलमलं प्रश्रयेण। निःसहाऽसि जाता। तदहमेव नयामि।**

(सस्मितम्) **अपिच,**

यस्य पाणिग्रहः सुभ्रु, चिन्तितोऽपि सुखावहः ।
दैवाद्गृहीतएवाद्य स पाणिर्मुच्यतां कथम् ? ॥

(कौमुदी सहर्षव्रीड़ौत्सुक्यसाध्वसा अधोमुखी निर्व्वचना भवति)।

**सुधा।** (स्वगतम्) **न खल्वनेन परिहासेन परिकुपिता तत्र-भवती?** (प्रकाशम्) **सुन्दरि,**

यद्यनेनोपचारेण मन्यसे मद्व्यतिक्रमम् ।
क्षम्यतां प्रथमोऽयन्तदपराधः कृशोदरि ॥

(इति कौमुदीमीक्षते)।

**कौमु।** (स्मृतिमभिनीय सविषादम्) **तुवरदु तुवरदु महाभाओ। पिअसही मे सुन्दरी अवि मह एव्व अवत्थां पाविआ, ण जाणामि कहिं चिट्ठदि जीअदि वा ण वा त्ति। जं सच्चं दरीअदि विअ मे हिअअं। विस्सरिअं आसि क्खु एदं मए मन्दभाइणीए। दाणिं महाभाअस्स वअणेण पड़िवुद्धा म्हि[१]।**

(१) त्वरतां त्वरतां महाभागः। प्रियसखी मे सुन्दर्य्यपि ममैवावस्थां प्रापिता। न जानामि कुत्र तिष्ठति जीवति वा न वेति, यत्सत्यं दीर्य्यते इव मे हृदयम्। विस्मृतमासीत् खल्वेतन्मया मन्दभागिन्या। इदानीं महाभागस्य वचनेन प्रतिबुद्धाऽस्मि।

सुधा । अलमात्मानं खेदयित्वा । हृदयं मे कथयति जीवत्यायुष्मती । तदचिरेणैव द्रक्ष्यसि प्रियवयस्याम् । न पुनरस्मिन् विघ्नसंकुले प्रदेशे त्वामुत्सृज्य गन्तुमुत्सहे । एहि निष्प्रत्यूहं प्रदेशं तावद्गच्छावः ।

कौमु । जधा दे रोअदि[१] ।

(इति यथासम्भवं त्वरितं परिक्रामतः) ।

सुधा । (स्वगतम्) नूनमियं हर्षविषादयोरन्तरा वर्त्तते । तथाहि,

विकसितमिव पद्मं शैवलाश्लेषदिग्धं
घनलवपरिविद्धं पूर्णबिम्बं यथेन्दोः ।
जलदपवनभिन्नो निर्म्मलो दर्पणो वा
मलिनमपि मृगाक्ष्या वक्त्रमेतत् प्रसन्नम् ॥

अपिच,

म्लानकान्तिरपि वामलोचना
सप्रसादवदनैव लक्ष्यते ।
श्यामलेव नलिनी प्रफुल्लिता
बालभानुकिरणा घनान्तरात् ॥

(दृष्ट्वा) कथं रोदिति! हन्त, रोदनमपि प्रेक्षणीयमस्याः ।

(१) यथा ते रोचते

एषा हर्षविषादाभ्यां व्याप्ता युगपदङ्गना ।
वर्षातपाभ्यां संभिन्ना पूर्वसन्ध्येव लक्ष्यते ॥

भवत्वन्यतः सञ्चारयामि । (प्रकाशम्) सुन्दरि, पश्य पश्य, एष हरिणशिशुर्नष्टां मातरमन्विष्यन् कातरेण चक्षुषा दिशोऽवलोकयति । अयमितश्चित्रपतत्री तिरस्कृतशिल्पकौशलो निसर्गचारुतया नयनमनोहरः कलेन ध्वनिना त्वां सम्भावयति । अयञ्च निर्झरोद्गारः क्षणमात्रोपलम्भैर्मुक्ताफलस्थूलैस्तुषारजालैर्भूधरमलङ्करोति । (परिक्रम्य) इतस्तावत् प्रेक्षस्व,

विटपिनममुं लतेयं कोमलकिसलयकरेण परिरभ्य ।
नयनमनांसि स्थाने बध्नाति मनस्विनां भूयः ॥

(कौमुदी सव्रीडाऽधोमुखी भवति) ।

सुधा । (स्वगतम्) एवमियमतिव्रीडाकातरा । कथमिमामाश्वासयामि ?

कौमु । (परिक्रम्य गमनबाधां रूपयन्ती) हद्धी हद्धी, कधं कुससूईकण्टइदा इअं उग्घादिनी भूमीआ, परिक्खदा मे चलणा(१) ।

सुधा । कोमलाङ्गि, एवं यदात्थ । निःसहाऽसि जाता ।

(१) हा धिक् हा धिक्! कथं कुशसूचीकण्टकितेयमुद्घातिनी भूमिः, परिक्षतौ मे चरणौ ।

न खलु शक्ता त्वं परिक्रमितुम्। यद्यनुमन्यसे, अहमेव त्वामभिमतं देशं प्रापयामि। महत् खलु भोगसाधनं विशेषतस्तु सकललोकलोचनमधु तवेदं शरीरं सर्व्वथैव रक्षणीयम्।

(कौमुदी सव्रीड़ाऽधोमुखी तिष्ठति)।

सुधा। मुग्धे, अलमन्यथा सम्भाव्य। याच्यमानानां रुचयः खल्वनुरुध्यन्ते प्रणयिभिः।

कौमु। ण क्खु ण क्खु माणणिज्जेसुं जणेसुं अप्पाणं अवराहिणं करिस्सं[१]।

सुधा। नास्त्यनेनापराधः।

कौमु। किणा उण?[२]

सुधा। मृणालसुकुमारमिदमङ्गमायास्य अस्मन्मनसः खेदोत्पादनेन।

कौमु। (सव्रीड़म्) णं माणणिज्जो भवा[३]।

सुधा। सुन्दरि, यद्येवं, माननीयानां रुचयो न प्रति हन्तव्याः।

कौमु। णत्थि मे अदो परं वाआविहवो[४]।

(१) न खलु न खलु माननीयेषु जनेष्वात्मानमपराधिणं करिष्यामि।

(२) केन पुनः?

(३) ननु माननीयो भवान्।

(४) नास्ति मे अतः परं वाग्विभवः।

(इति शृङ्गारलज्जां नाटयन्ती तूष्णीमधोमुखी तिष्ठति)।

सुधा। अलमाशङ्कया। न खलु सुधाकरोऽलीकं मन्त्रयितुं जानाति।

(कौमुदी तथैवास्ते। सुधाकरो कौमुदीमङ्कमारोपयति। कौमुदी बाहुभ्यां सुधाकरं कण्ठे समालिङ्ग्य तदीयवक्षसि मुखमधोमुखं संस्थाप्य सवेपथुर्निमीलिताक्षी स्पर्शसुखमनुभवति।

सुधा। (परिक्रामन् स्पर्शसुखं रूपयित्वा स्वगतम्) अहो स्पर्शः!

अस्याः सुकुमारतरं स्पर्शं संचिन्त्य लज्जयाऽऽच्छन्नम्।
स्पृष्टं कथमपि लोकैर्म्लायति कुसुमं शिरीषस्य॥

(सविस्मयम्) कथं नु मानुषीणामीदृशः सुकुमारतरः सन्तर्पणकरश्च स्पर्शः! नूनमियम्,

पुण्यान्मध्यमलोकस्य द्युलोकस्य तपःक्षयात्।
चन्द्रविम्बाद्भुवं प्राप्ता मूर्त्ताऽमृतपरम्परा॥

अविमृष्यकारीव मे स्मरहरः प्रतिभाति। तथाहि,

हरेण कोपज्वलनेन पूर्व्वं
वृथैव दग्धो मकरध्वजोऽभूत्।
समस्तलोकस्य परं न यूनां
हरत्यकाण्डे यदियं मनांसि॥

(परिक्रम्य कौमुदी मङ्कादवरोप्य, प्रकाशम्) सुन्दरि, इदं शिलातलमध्यास्य प्रसूनपरागभरितमाचान्तनिर्झरोद्गार-

माकम्पितलतापल्लवमनिलं सेवमाना श्रममपनयतु भवती। श्रमः खल्वेष तवाननतिपृथुलमुक्ताजाल-श्रियमुद्वहन्तं श्रमोदकविन्दुस्तोमं सुखयन्नपनेतुम्।

कौमु। (उपविश्य सलज्जम्) महाभाअ, उक्कंठदि मे हि-अअं सहीदंसणस्स। इच्छामि महाभाअस्स प्पसा-आदो उणो वि से दंसणसुहमणुहोदुं[१]।

सुधा। नैतत् पुनर्वक्तव्यम्।

कौमु। (साग्रहम्) तेण हि तुवरदु महाभाओ। विलं-वासहं मे हिअअं[२]।

सुधा। एष गच्छामि (इति चिन्तां नाटयति)!

कौमु। किं विलंवीयदि ?[३]।

सुधा। सुन्दरि, न विलम्ब्यते। एतत्तु विचार्य्यते, अस-हाया खल्विदानीमसि, मा तावत् कोऽप्यनार्य्यः किमप्यत्याहितमाचरेत्।

कौमु। (सविषादम्) महाभाअ, ण सक्कणोमि सहीवि-

(१) महाभाग, उत्कण्ठते मे हृदयं सखीदर्शनाय। इच्छामि महाभागस्य प्रसादात् पुनरपि तस्या दर्शनसुखमनुभवितुम्।

(२) तेन हि त्वरतां महाभागः। विलम्बासहं मे हृदयम्।

(३) किं विलम्ब्यते ?

ओअवाउला अप्पाणं पज्जवत्थावेदुं[१]। (इति रोदिति)।

सुधा। मा कातरा भव। इयममानुषी मुद्रा त्वां रक्षिष्यति। (इति स्वहस्तान्मुद्रामुन्मुच्य कौमुदीहस्ते निवेशयितुं प्रवृत्तः। कौमुदी निमीलिताक्षी स्पर्शसुखमुग्धा तिष्ठति। सुधाकरोऽयथासन्निवेशं कम्पयन् चिरेण सन्निवेश्य)

महाभागे, वनदेवतास्त्वां रक्षन्तु। अयमदूरे तपोवनाभोगः। नास्त्यत्र क्रूरसत्त्वानां सञ्चारः। सावधाना तावत् मुहूर्त्तं तिष्ठ। (इति प्रस्थितः)।

कौमु। (स्वगतम्)।

कट्ठं तीसे विरहो दूमइ विसमं तदोवि दइअस्स।
दोहिं किट्ठं हिअअं एदं विउलं समाउलं होइ[२]॥

(प्रकाशं सव्रीड़म्) ण क्खु चिरेअव्वं महाभाएण[३]।

सुधा। अयि मुग्धे, एतदपि वक्तव्यम्! अयमहमागतएव। (इति परिक्रामति)।

कौमु। (निःश्वस्यात्मगतम्) सणेहो णाम क्खु इमो पिह-

(१) महाभाग, न शक्नोमि सखीवियोगव्याकुला आत्मानं पर्य्यवस्थापयितुम्।

(२) कष्टं तस्याविरहो दुनोति विषमं ततोऽपि दयितस्य।
द्वाभ्यां कष्टं हृदयं एतत् विपुलं समाकुलं भवति॥

(३) न खलु चिरयितव्यं महाभागेन।

खिज्जो कट्टुव्वआरो। इदो पिअसहीए विरहो, इदो पाणाहिंतोवि पिअअरस्स जीइदसव्वस्सस्स पणइअणस्स विच्छेदो। जं सच्चं ण मे धिदिं आबद्धाइ चेओ[१]।

(संस्कृतमाश्रित्य)

समाघूर्णति चेतो मे स्नेहयोगात् द्वयोरपि ।
विरुद्धदिक्कयोर्वाय्वोः सन्निपातादिवाल्पकम् ॥

सुधा। (आकर्ण्य स्वगतम्) वस्तु,—इति वाक्यशेषः। (सहर्षम्) श्रुतं यत् श्रोतव्यं, शक्यं खल्विदानीं जीवितमवलम्बितुम्। कुतः?

हृयमतिमधुराभिर्वाग्भिरन्तर्गतं यत्
स्फुटयति खलु बाला भावमव्याजरम्यम् ।
न खलु न खलु सैषा केवलं प्रार्थनीया
वयमपि भृशमस्याः प्रार्थनीयत्वमाप्ताः ॥

अपिच,

विरहक्लेशो भूयानपि सह्यो जलधरस्य चपलायाः ।
यदियमनन्यासक्ता निबद्धभावा सदैवाच ॥

(परिक्रम्यायतोऽवलोक्य सहर्षम्) लब्धो मया प्रियाऽऽराधना-

(१) खेदोनाम खल्वयं स्पृहनीयः कष्टप्रकारः। इतः प्रियसख्या विरहः, इतः प्राणेभ्योपि प्रियतरस्य जीवितसर्व्वस्वस्य प्रणयिजनस्य विच्छेदः! यत् सत्यं न मे धृतिमावभ्नाति चेतः।

पचारः। एषा खलु सुन्दरी संयमितकरयुगला शोक-व्याकुलाससाध्वसमितस्ततोऽवलोकयन्ती इतएवा-गच्छति। लताप्रतानान्तरिताः पश्यामस्तावदस्या-श्चेष्टितम्। (इत्येकान्ते स्थितः)।

(ततः प्रविशति यथोक्तव्यापरा सुन्दरी)।

सुन्द। (सोद्वेगम्) हला कोमइ, कहिं सि देहि मे पडि-वअणं[१]। (इति रोदिति)।

सुधा। नूनमस्याः सखीस्नेहोमीयते नान्तरात्मनि।
इतीवाश्रुच्छलेनोच्चैर्वपुराप्लावयत्यपि॥

सुन्द। इदो होज्जउ इध वा होज्जउ[२]। (इति ससाध्वसा लताकुञ्जानि विचिनोति।

सुधा। आन्दोलिते किसलये मरुता किलैषा
सञ्चारमेणनयना मनुते परस्य।
ये शान्तये खलु हिता रुचिराः पदार्थाः
शङ्काऽऽकुले मनसि ते प्रथयन्ति शङ्काम्॥

यत्सत्यं विपरीते चेतसि सर्व्वमेव विपरीतायते। तथाहि,

इयं तीव्रां बाधामिह परिगता मुग्धहृदया
ध्रुवं शान्तिस्थानं गणयति महासाध्वसपदम्।

---

(१) अयि कौमुदि, क्वासि देहि मे प्रतिवचनम्।
(२) इतो भवेत् इह वा भवेत्।

जनो मिथ्यादृष्टिप्रणयरसिको भोगपरमः
परं मोक्षं साक्षात् प्रभवमवगच्छत्यतिभियः॥

सुन्द। (विचिन्त्य सविषादम्) कधं ण कहिं पि। किं दाणिं कुणामि मन्दभाइणी। (वन्धनवाधां रूपयन्ती) आः कधं करवन्धणम्पि पीड़ेइ। चलणवन्धणं दाव सिढिलं आसि। अप्पेण आआसेण तं तुडिअं। इणमो उण दढ़अरं हत्थवन्धणं कधं ओणेमि? होदु उणोवि जइस्सं(१)। (इति हस्तौ धुनोति)।

सुधा। इदं खलु वद्धमक्षभवत्याः करद्वयम्। अभूतां खलु,

अस्याः संयमनस्थानाद्गौरवाद्विनतभ्रुवः।
किञ्चिदालोहितस्फीतौ हस्तौ कोपादिवाभितः॥

सुन्द। (सविषादम्) कधं ण तुडुइ। (विचिन्त्य) किं अदो परं मन्दभाइणीए जीइदेण। (सास्रम्) हला पिअसहि कोमइ, ण उण जाणामि जीअसि वा ण वा त्ति! मन्दभाइणीए मह एसो पच्छिमो दे माणसो परी-

(१) कथं न कुत्रापि। किमिदानीं करोमि मन्दभागिनी। आः कथं करबन्धनमपि पीड़यति। चरणबन्धनं तावत् शिथिलमासीत्। अल्पेनायासेन तत् त्रुटितं। इदं पुनर्दृढ़तरं हस्तबन्धनं कथमपनयामि। भवतु पुनरपि यतिष्ये।

रम्भो। (अश्रूणि विमुच्य स्थानान्तरे)। अज्ज सुहाअर, ण पारिअं मए अप्पपुणाए तुम्हाणं समाअमं पेक्खिदुं। सुमरिस्सिसि मं। णमो दे। (इति प्रणमति। वास्पावसन्नकण्ठी) णाह सालङ्काअण, णत्थि मे तं पुण्णं, जेण कमलतंवे दे चलणे सुस्सूसिअ अप्पाणं किदत्थं करामि। परवई क्खु, म्हि ण मए पुरोभाइणीए महुरं आलविओ वि भवं। हिअअं दाव आअत्तं अजोग्गम्पि दे एव्व दिण्णं, ण जानामि तुमए गहिअं ण वा त्ति। अधआ। किं इमिणा विआरिदेण? एत्तिअमत्तेण क्खु णिव्वुदा म्हि संवुत्ता। ण उण अप्पपुण्णा अदो परं कामेउं पारेइ[१]। (इति व्याकुला रोदिति)।

कथं न तुष्यति। किमतः परं मन्दभागिन्या जीवितेन। अयि प्रियसखि कौमुदि, न पुनर्जानामि जीवसि वा न वेति। मन्दभागिन्या-मम एष पश्चिमस्ते मानसः परीरम्भः। आर्य सुधाकर, न पारितं मया अल्पपुण्यया युवयोः समागमं प्रेक्षितुं। स्मरिष्यसि मां। नमस्ते। नाथ सालङ्कायन, नास्ति मे तत्पुण्यं येन कमलताम्रौ ते चरणौ शुश्रूषित्वा आत्मानं कृतार्थं करोमि। परवती खल्वस्मि। न मया पुरोभागिन्या मधुरमालपितोऽपि भवान्। हृदयं तावदायत्तं अयोग्यमपि तुभ्यमेव दत्तं, न जाने त्वया गृहीतं न वेति। अथवा। किमनेन विचारितेन? एतावन्मात्रेण खलु निर्वृताऽस्मि संवृत्ता। न पुनरल्पपुण्या अतः परं कामयितुं पारयति।

सुधा। (सहर्षम्)। कथं प्रियवयस्यमनुरक्ता तत्रभवती!

सुन्द। (निःश्वस्य) दाणिं अहिच्चआदो अप्पाणं पाडेउण वावादेस्सं[1]। (इति परिक्रामति)।

सुधा। महानाधिः खल्वत्रभवत्याः। तन्न युक्तमतः परं विलम्बितुम्।

(परिक्रम्य सुन्दर्य्याः सम्मुखे स्थित्वा) आर्य्ये, अलमलमनेन दुर्व्यवसायेन, जीवति ते प्रियसखी। (इति हस्तबन्धनं मोचयति)।

सुन्द। (सव्रीड़मात्मगतम्) हद्धी हद्धी! सव्वं मह वअणं सुणिअं महाभाएण। (प्रकाशं साग्रहम्) अज्ज, वन्दामि। अवि कुसलं पिअसहीए[2]?

सुधा। सर्व्वं कुशलम्।

सुन्द। अध सा कहिं चिट्ठदि[3]?

सुधा। एहि तावत्। स्वयमेव द्रक्ष्यसि। त्वरतां भवती। पर्य्युत्सुका खलु सा कथं कथमपि त्वद्विरहकातरमात्मानं धारयति।

(१) इदानीमधित्यकात आत्मानं पातयित्वा व्यापादयिष्ये।

(२) हाधिक् हाधिक्! सर्व्वं मम वचनं श्रुतं महाभागेन। आर्य्य, वन्दे अपि कुशलं प्रियसख्याः?

(३) अथ सा कुत्र तिष्ठति?

सुन्द । वस्सला क्खु मे पिअसही[१] ।

सुधा । इदानीं त्वद्गतजीवितेति भण ।

सुन्द । (सस्मितम्) णं भणामि दाणिं तग्गदजीइदा मे पिअसही त्ति[२] ।

सुधा । (सस्मितम्) अलं परिहासेन। त्वद्विरहेणातिमात्रमुत्कण्ठिता ते सखी ।

सुन्द । (सस्मितम्) आसि क्खु एव्वं[३] ।

सुधा । अथेदानीम् ?

सुन्द । अण्णसंकन्तो से णेहो[४] ।

सुधा । किं कारणम् ?

सुन्द । ण क्खु अप्पणो पभवइ[५] ।

सुधा । कस्य हेतोः ?

सुन्द । परअसो क्खु एसो[६]।

सुधा । कः पुनरसौ परः ?

(१) वत्सला खलु मह्यं प्रियसखी ।

(२) ननु भणामि इदानीं त्वद्गतजीविता मे प्रियसखीति

(३) आसीत् खल्वेवम् ।

(४) अन्यसंक्रान्तस्तस्याः स्नेहः ।

(५) न खल्वात्मनः प्रभवति ।

(६) परवशः खल्वेषः ।

सुन्द । सो दाणिं अप्पा । अम्हे दाणिं परा संवुत्ता[१] ।

सुधा । भवतु, कोऽसौ ?

सुन्द । कोवि अज्जब्बुवो अणज्जो[२] ।

सुधा । अपि ज्ञायते नामधेयतः ?

सुन्द । को तस्स अणज्जस्स णाममाहणेण अप्पाणं अवराहिणं करिस्सिदि[३] । (इति कृतकदुःखं नाटयति) ।

सुधा । (सविषादमात्मागतम्) भूयसा गृहीतार्थः पुनरपि महता संशयेन विहस्तितोऽस्मि ।

तस्यास्तादृशमुग्धभावमधुराश्चेष्टाः समाश्वासना-
आलिश्चेयमनल्पगूढवचसा मथ्नाति चेतोमम ।
वस्तुन्यत्र किमस्ति वास्तवमिति व्यामूढधीर्निश्चयं
नो गच्छामि विवेकमन्थरमहो सत्यं मनः कामिनाम् ॥

न जानें कमधन्यं धन्यं वा एषा कथयिष्यति । (प्रकाशम्) कथय कथय, न खल्वर्हसि प्रथममस्मत्प्रणयमुपरोद्धुम् ।

सुन्द । (सस्मितम्) का गई । एसा कहेमि[४] ।

(१) स इदानीमात्मा । वयमिदानीं पराः संवृत्ताः ।

(२) कोऽप्यार्य्यब्रुवोऽनार्य्यः ।

(३) कस्तस्यानार्य्यस्य नामग्रहणेनात्मानमपराधिनं करिष्यति ।

(४) का गतिः । एषा कथयामि ।

सुधा । अवहितोऽस्मि ।

सुन्द । णं सुहाअरो[१] ।

सुधा । (सहर्षमात्मगतम्) प्रत्युज्जीवितोऽस्मि । (सवितर्कम्) न खल्वहं प्रत्यभिज्ञातस्तत्रभवत्या, अथवा परिहासो-ऽयम्? (विभाव्य) असंशयं परिहासोऽयम् । कुतः ?

अमलिनमुखपद्मा भाषते मां मृगाक्षी
कृतकमिव विषादं सस्मितास्या करोति ।
अवितथमनयाऽहं प्रत्यभिज्ञातएव
न खलु परममर्त्तं व्यज्यते गोप्यतत्त्वम् ॥

भवतु एवं तावत्। (प्रकाशम्) का पुनरनार्य्यता सुधा-करेणानुष्ठिता ?

सुन्द । किं अस्सं । तेण क्खु पिअसहीए हिअअं ओहोरिअं ण उण अब्भुववण्णो एसो[२] ।

सुधा । (सस्मितम्) एतत् कृतं तेन ?

सुन्द । वाढ़ं एदं किदं तेण[३] ।

सुधा । न खल्वेतावन्मात्रेणानार्य्यः सुधाकरः ?

सुन्द । अधइं[४] ।

(१) ननु सुधाकरः ।

(२) किमन्यत् । तेन खलु प्रियसख्या हृदयमपहृतं न पुनरभ्युपपन्नैषा ।

(३) वाढ़मेतत् कृतं तेन ।

(४) अथकिं ।

सुधा । न खल्वत्र सुधाकरोऽपराध्यति ।

सुन्द । को उण[१] ?

सुधा । कौमुदीवयस्या सुन्दरी नाम ।

सुन्द । (सवैलक्ष्यम्) कधं विश्र[२] ?

सुधा । तया खलु सुधाकरवयस्यस्य हृदयमपहृतम् । श्रुतं भवत्या ?

सुन्द । (कथमपि वचनं व्यवस्थाप्य सव्रीडम्) सुणिश्रं । कधं एत्तिअमत्तेण सुहाअरो ण अवरज्झइ[३] ?

सुधा । यया किल सुधाकरवयस्यस्य हृदयमपहृतं, तद्वयस्याया हृदयमपहरन्नपि सुधाकरः कथमपराध्यतु ।

सुन्द । (सस्मितम्) तं इदं वुड्ढभूदजोणिवुत्तन्तं अणुहरइ[४] ।

सुधा । स पुनः कीदृशः ?

सुन्द । सुणादु महाभाओ । दोल्लं भाअराणं अवरओ अदि व्व पचण्डो किणावि भूदजोणिणा

(१) कः पुनः ?

(२) कथमिव ?

(३) श्रुतं । कथमेतावन्मात्रेण सुधाकरोनापराध्यति ?

(४) तदेतद्वृद्धभूतयोनिवृत्तान्तमनुहरति ।

अब्भुसिअस्स कस्सवि भूदाआसरुक्खस्स मूले णिच्चं अमेज्झं णिक्खिवइस्स। तेण एव्वं उव्वेइओ सो भूदजोणी वुड्ढं तास पिअरं सिविणे कहेइअ; अवअरओ दे पुत्तो मं उव्वेएइ, ण क्खु इमस्स पारेमि, ता जइ तं ण णिआरेसि, तइ पढमअं दे पुत्तं चरक्खिस्सं। सक्को क्खु एसो विणअ-णम्मो त्ति[१]।

सुधा। (सस्मितम्) किं क्रियताम्। यः खल्वपकारिणं न पारयति, स तत्पक्षस्याप्यपकृत्य वैरशुद्धिं करोति। अर्करश्मिसन्तप्तो मतङ्गजस्तत्पक्षं कमलाकरमा-लोड़यन्नत्र प्रथमं निदर्शनम्।

सुन्द। (विहस्य) सुट्ठु क्खु सुपुरिसवुत्तं अणुट्ठिदं भवदा[२]।

सुधा (सस्मितम्) भवत्याऽपि सुमहिलावृत्तम्।

सुन्द। (सव्रीड़म्) ण क्खु परिकुविदो भवं[३]?

(१) शृणोतु महाभागः। द्वयोर्भ्रात्रोरवरजोऽतीव प्रचण्डः केनापि भूतयो-निनाऽध्युषितस्य कस्यचिद्भूतावासवृक्षस्य मूले नित्यं अमेध्यं निक्षिपति स्म। तेनैवमुद्वेजितः स भूतयोनिर्वृद्धं तस्य पितरं स्वप्नेऽकथयत्;— अवरजस्ते पुत्रो मामुद्वेजयति, न खल्वस्य पारयामि, तत् यदि तं न निवारयसि तदा प्रथमजन्ते पुत्रं भक्ष्यामि, शक्यः खल्वेष विनय-नम्रः—इति।

(२) सुष्ठु खलु सुपुरुषवृत्तमनुष्ठितं भवता।

(३) न खलु परिकुपितो भवान्?

सुधा । किमनिमित्तं कुप्यते ।

सुन्द । अणुग्गहीदम्हि । वअस्सअणकिलेसं पेक्खिअ चवलाए मए क्खु एव्वं कीलिअं । ता क्खमदु मं भवम्[१] ।

सुधा । समानमत्रावयोर्निमित्तम् । तदत्र नैकएकेन क्षमापनीयः । तदेहि एकाकिनी किल ते सखी तिष्ठति । (इति परिक्रामतः) ।

सुन्द । कहिं मे पिअसही चिट्ठदि? तुवरइ मे हिअअं तीसे दंसणस्स[२] ।

सुधा । अत्र युवयोः समविभागः प्रणयः । सखि, किं बहुना,

त्वां विना ते प्रियसखी नलिनीव दिनश्रियम् ।
परिम्लानाम्बुजमुखी तदुल्लासय सेव ताम् ॥

सुन्द । कधं उण अब्भुववण्णा पिअसही भवदा[३] ?

सुधा । यदृच्छयाऽत्र विचरतैकस्मिन् दुर्गमप्रदेशे लता-

(१) अनुगृहीताऽस्मि । वयस्यजनक्लेशं प्रेक्ष्य चपलया मया खल्वेवं क्रीडितं तत् क्षमतां मां भवान् ।

(२) कुत्र मे प्रियसखी तिष्ठति ? त्वरते मे हृदयं तस्या दर्शनाय ।

(३) कथं पुनरभ्युपपन्ना प्रियसखी भवता ?

मण्डपान्तः संयमितकरचरणा मूर्च्छिता ते सखी मयोपलब्धा ।

सुन्द । (सोद्वेगम्) तदो तदो[१] ?

सुधा । ततोऽहमुन्मुच्य बन्धनानि प्रत्यागतचेतनां विधाय तामिह संरक्ष्य भवदन्वेषणाय प्रवृत्तः । (इति कौमुदीमङ्गुल्या दर्शयति) ।

सुन्द । (सत्वरमुपसृत्य) हला पिअसहि, दिट्ठा सि उण मन्दभाइणीए[२] ! (इत्यश्रूणि मुञ्चति) ।

कौमु । (उत्थाय साश्रम्) हला जीअसि? गाढं परिस्सजसु मं[३] ।

(अन्योन्यं परिष्वजेते) ।

सुधा । (स्वगतम्) अहो मधुरोऽनयोर्भावः । युज्यते खल्वेतत् ।

अव्याजमधुरं प्रेम मुग्धानामेव योषिताम् ।
कठोरनीतिनिष्ठानां नराणां कृत्रिमं हि तत् ॥

स्त्रीपुंसयोस्तु प्रणयो नानेनोपमेयः । यतः,

दयितासु वल्लभानां प्रायेण भवत्युपाधिजः प्रेमा ।
निरुपाधिप्रेमाणो द्वित्रा यदि जगति विजयन्ते ॥

(१) ततस्ततः ?

(२) अयि प्रियसखि, दृष्टाऽसि पुनर्मन्दभागिन्या !

(३) अयि, जीवसि ? गाढं परिष्वजस्व माम् ।

तथापि स्त्रियएवोत्तमर्णाः । कुतः ?

निर्व्याजप्रियतानां स्त्रीणां लोकः कथं भवेदनृणः ।
याः खलु जहति प्राणान् परेतमपि दयितमालिङ्ग्य ॥

(प्रकाशम्) बलवत् खलु परिश्रान्ता तत्रभवती । इदं स्फटिकशिलातलमध्यास्य विश्राम्यतां भवत्यौ ।

(उभे तथा कुरुतः) ।

सुन्द । णं भवा वि शिलाअलेकदेसमलङ्करेदु(१) ।

(कौमुदी किञ्चिदपसृत्य कृतककोपा सुन्दरीमवलोकयति । सुधाकरः शिलातलैकदेशे उपविशति) ।

सुधा । कः पुनरनार्य्यो भवत्योः क्लेशमूलम् ?

सुन्द । णाहं सक्का । पिअसही कहेदु(२) ।

कौमु । (स्वगतम्) का गई । (प्रकाशम्) सुणादु महाभाओ । अज्ज किल चउद्दही त्ति भअवदो सूलवाणिस्स जत्तामहुस्सवदंसणत्थं अम्हे गदाओ(३) ।

सुधा । ततस्ततः ?

कौमु । तदो महुस्सवं पेक्खिअ जाव पडिणिवुत्ताओ अम्हे दाव भअङ्करवेसाए काइणा वि इहाणेहीअ

(१) ननु भवानपि शिलातलैकदेशमलङ्करोतु ।

(२) नाहं शक्ता । प्रियसखी कथयतु ।

(३) का गतिः । शृणोतु महाभागः । अद्य किल चतुर्दशीति भगवतः शूलपाणेर्यात्रामहोत्सवदर्शनार्थमावां गते ।

संजमिदाओ । एत्तिअमत्तं अहं जाणामि । तदो महाभाएण अब्भुववण्णा म्हि[१] ।

सुधा । नूनं तस्यैव कापालिकापसदस्य दुश्चेष्टितमेतत् । याऽपि वामिहानीतवती, साऽपि तस्यैव शिष्या कङ्कालमालिनीति तर्कयामि ।

सुन्द । उववण्णो तक्को अज्जस्स । एव्वं क्खु हदासाए भणिअं । लद्धं मए गुव्वाराहणोवअरणं, इमिणा क्खु उवअरणेण चामुण्डामाराहअ सिद्धमन्ता होहिन्ति गुरुओ त्ति[२] ।

सुधा । कस्य पुनरपरस्यैतादृशं नैपुण्यम् ।

कौमु (सविषादम्) उक्कंठइ मे हिअअं पिअराणं चलणे वन्दिउं । एत्तिअकालं मं अपेक्खन्ता वाउला क्खु पिअरा त्ति सम्भावेमि[३] ।

---

(१) ततोमहोत्सवं प्रेक्ष्य यावत् प्रतिनिवृत्ते आवां, तावद्भयङ्करवेशया कयाऽपि इहानीय संयमिते । एतावन्मात्रमहं जानामि । ततो-महाभागेनाभ्युपपन्नाऽस्मि ।

(२) उपपन्नस्तर्क आर्य्यस्य । एवं खलु हताशया भणितं । लब्धं मया गुर्वाराधनोपकरणम् । अनेन खलूपकरणेन चामुण्डामाराध्य सिद्धमन्त्रा-भविष्यन्ति गुरवः – इति ।

(३) उत्कण्ठते मे हृदयं पित्रोश्चरणान् वन्दितुं । एतावत्कालं मामपश्य-न्तौ व्याकुलौ खलु पितराविति संभावयामि ।

सुधा । युज्यते ।

(कौमुदी सुन्दरीमुखमवलोकयति) ।

सुन्द । इच्छदि पिअसही महाभाएण घरं पाविदा पिअरे वन्देउं(१) ।

सुधा । नैतद्वक्तव्यम् ।

सुन्द । लज्जइ क्खु एसा महाभाअं आआसेउं(२) ।

कौमु । (स्वगतम्) साहु सुन्दरि, साहु, मह ज्जेव्व हिअएण मन्तिदवदीसि(३) ।

सुधा । मा मैवम् । विधेयोऽस्मि वां । (सस्मितम्) न खलु मामुदासीनमवगच्छति ते सखी ?

सुन्द । (सस्मितम्) किं अस्सं ओगच्छदु । को उण अस्सो मिलाणकमलिनीसरिसम्पि उवेक्खदु(४) ।

(कौमुदी सुन्दरीमङ्गुल्या तर्जयति) ।

सुधा । तर्हि अयुक्तमुदासीनस्याचावस्थानम् ।

(इत्युत्तिष्ठति) ।

कौमु । (जनान्तिकम्) हदासे, पसादेहि दाव महाभाअं ।

---

(१) इच्छति प्रियसखी महाभागेन गृहं प्रापिता पितरौ वन्दितुम् ।

(२) लज्जते खल्वेषा महाभागमायासयितुम् ।

(३) साधु सुन्दरि, साधु, ममैव हृदयेन मन्त्रितवत्यसि ।

(४) किमन्यदवगच्छतु । कः पुनरन्यो म्लानकमलिनीसदृशीमप्युपेक्षते ।

मा उणोवि से हदासाए करअलवत्तिणी होहि[१]।

सुन्द। (विहस्य) हला एत्तिअं णिमित्तं पसाअणस्स[२]?

कौमु। (सासूयम्) एदिसीए अवत्थाए वि कीलसि[३]।

सुन्द। (सकोपमिव) ण कीलिस्सं[४]।

कौमु। तेण हि पसादेहि महाभाअं[५]।

(सुधाकरः परिक्रामति)।

सुन्द। जो अवरज्झइ सो पसादेदु। अस्स को अवओ[६]।

कौमु। दुव्विणीदे, पसादेहि दाव[७]। (इति कातर्यं नाटयति)।

सुन्द। (स्वगतम्) का गई। (प्रकाशम्) महाभाअ, कौमुदी पसादेइ क्खमीअदु इमो अवराहो त्ति[८]।

---

(१) हताशे, प्रसादय तावन्महाभागं। मा पुनरपि तस्या हताशायाः करतलवर्त्तिनी भव।

(२) अयि, एतावन्निमित्तं प्रसादनस्य।

(३) ईदृश्यामवस्थायामपि क्रीड़सि?

(४) न क्रीड़िष्यामि।

(५) तेन हि प्रसादय महाभागम्।

(६) योऽपराध्यति स प्रसादयतु अन्यस्य कोऽव्ययः।

(७) दुर्व्विनीते, प्रसादय तावत्।

(८) का गतिः। महाभाग, कौमुदी प्रसादयति क्षम्यतामयमपराधइति।

सुधा। (प्रतिनिवृत्य) एकेन समयेन स्नातुमिच्छामि।

सुन्द। किणा उण[१] ?

सुधा। अत्रभवती मां स्वजनमवगच्छतु।

सुन्द। (सस्मितम्) किमिममाशासीअदि[२] ?

सुधा। शृणुमस्तावत्।

सुन्द। हला कौमइ, पडिबज्जसु दाव पडिवअणं[३]।

कौमु। (सासूयम्) अलं कीलिदेण। उक्कंठइ मे हिअअं पिअरे पेक्खिदुं[४]।

सुन्द। अदोज्जेव्व तुवरदु पडिवअणस्स[५]।

कौमु। तुमं मे मुहं होहि[६]।

सुन्द। (स्वगतम्) न जुत्तं विलंविदुं, काअरा क्खु एसा दीसइ। (प्रकाशम्) महाभाअ, कोमई विस्सवेदि जो छन्दो महाभाअस्स त्ति[७]।

---

(१) केन पुनः ?

(२) किमिदमाशास्यते ?

(३) अयि कौमुदि, प्रतिपद्यस्व तावत् प्रतिवचनम्।

(४) अलं क्रीडितेन। उत्कण्ठते मे हृदयं पितरौ प्रेक्षितुम्।

(५) अतएव त्वरतां प्रतिवचनाय।

(६) त्वं मे मुखं भव।

(७) न युक्तं विलम्बितुं कातरा खल्वेषा दृश्यते। महाभाग, कौमुदी विश्रापयति यश्छन्दो महाभागस्येति।

सुधा। अनुगृहीतोऽस्मि।

सुन्द। अथ घरगमनस्स को विलम्बो[1]।

सुधा। न खलु कोऽपि। प्रतिष्ठेतां भवत्यौ।

(उभे उत्तिष्ठतः)।

(नेपथ्ये)।

आः पापे, क्वेदानीं यास्यसि।

क्रोधस्फूर्जितकेशरस्य विकटव्याघूर्णिताक्षस्य वा
हर्यक्षस्य बुभुक्षितस्य जरठाद्‌दंष्ट्रान्तरालान्मृगीम्।
त्रातुं वाञ्छति कोऽविवेकरहितस्तेनैव सार्द्धं बला-
च्चामुण्डामिह चण्डमुण्डमथिनीमृप्स्यामि चण्डां त्वया॥

इयमहमिदानीम्,

चञ्चत्तीक्ष्णासिधारैः परिमृदुलपयोजन्मकाण्डोपमात्ते
संछिन्नात् कण्ठनालाद्‌दहलवलवलच्छोणितैः कोष्णधारैः।
चामुण्डां मुण्डमालारुधिरकरतलालङ्कृतां शात्रवाणां
साक्षाद्‌दृप्स्यामि भूयः सपिशितवलिभिर्योगिनीनां गणांश्च॥

कौमु। (भयं रूपयित्वा) महाभाअ, परित्ताअसु परित्ताअसु। तीसे विअ हदासाए सरसंजोओ सुणीअदि[2]।

(१) अथ गृहगमनस्य को विलम्बः?

(२) महाभाग, परित्रायस्व परित्रायस्व। तस्या इव हताशायाः स्वरसंयोगः श्रूयते।

सुधा । न भेतव्यम् ।

(ततः प्रविशति कुञ्जा खङ्गहस्ता कङ्कालमालिनी । कौमुदी वेपते)।

कङ्का । (कौमुदीमवलोक्य सरोषम्) ।

शमी ज्वलत्कोटरवह्निनेव
सन्तप्यमानाऽन्तरसम्भृतेन ।
क्रोधाग्निनाऽतिक्रमजेन भूयो
निर्व्वापयामि क्षतजैस्त्वैनम् ॥

(इति परिक्रामति)

सुधा । आः पापे,

कथमिमामनवाप्तमनोरथां
व्यवसिताऽसि विहन्तुमपापिनीम् ।
अपचयोन्मुखमेव सुधाकरं
ग्रसति राहुरपूर्णकलं न तु ॥

कङ्का । (अनाकर्णितकेन) ।

ध्वान्तस्येव प्रतीपां मे क्षुद्रां दीपशिखामिव ।
वात्येव त्वां हराम्येषा यः शक्नोति स रक्षतु ॥

(इत्युद्धतं परिक्रामति । कौमुदी भूयोवेपते) ।

सुधा । (सकोपम्) आः पापे, कथं खल्वसि,

विलोचनानां कमनीयमुत्सवं
चक्षुष्मतः सर्व्वजनस्य सर्व्वदा ।

सदा प्रफुल्लास्यमनोहरामिमां
हन्तुं त्रियामा नलिनीमिवोद्यता ॥

**कङ्का ।** (अनाकर्णितमेव नाटयन्ती) **देवि, चामुण्डे, गृहाणैनाम् ।** (इति खड्गमुद्यम्य धावति । कौमुदी मूर्च्छिता पतति । सुन्दरी स्तब्धा तिष्ठति) ।

**सुधा ।** (ससम्भ्रमम्) **सुन्दरि, सुन्दरि, शुश्रूषस्वैनाम् । अहमेतां दुष्टतापसीं शिक्षयामि ।** (इति खड्गमाच्छिप्य बलात् कङ्कालमालिनीं निवारयति) ।

**कङ्का ।** (सक्रोधम्) **आः पाप, त्वमपि नाम चामुण्डोपहाराय भवसि ।** (इति सुधाकरं तर्ज्जयति) ।

**सुधा ।** **आः पापे, दुष्टतापसि,**

निशाचरीमिव क्रूरामनार्य्यां त्वां सुधाकरः ।
न चिरादुद्धराम्येष साचाद्विषलतामिव ॥

**कङ्का ।** (विकटं विहस्य) **साधु ब्राह्मणडिम्भ, साधु !**

संत्रस्तैरग्रतो व्याघ्रशः क्रोष्टुभिः कुश्यते यथा ।
मत्समत्तं तथैव त्वमनात्मज्ञ, विकत्थसे ! ॥

**हताश, न खल्वात्मानं भारभूतमवैषि ? कथं रे क्षुद्रोऽपि महतां वाचं भाषमाणो नापत्रपसे ?**

**सुधा ।** **दुष्टे, वृथा गर्व्विते, अलमलमनेन,**

लोहस्य भारात् खलु गौरवाढ्यः
स्वल्पप्रमाणोऽपि मणिर्विशुद्धः ।

मृगेन्द्रपोतोऽपि करीन्द्रहन्ता
कचं दहत्यल्पतरोऽपि वह्निः ॥

स्मरेदानीं यत् स्मर्त्तव्यम् ।

कन्हा । अलमुत्तरोत्तरेण । नातिचिरात् ज्ञास्यसि, यः स्मर्त्तव्यं स्मरिष्यति ।

सुधा । दुष्टे, अलं वहु विकत्थ्य । कर्म्मणैवाधरोत्तरभावो व्यक्तीभविष्यति । तदेहि, विमर्द्दक्षमं देशमाश्रयावः । (इति परिक्रम्य निष्क्रान्तौ) ।

सुन्द । (सुप्तोत्थितेव प्रकृतिमापन्ना ससम्भ्रमं चेलाञ्चलेन कौमुदीं वीजयन्ती) समस्ससिहि सहि, समस्ससिहि । सव्वधा कदत्थणपरं देव्वमम्हे किदकचं दाणिं संपसम् । इमा क्खु,

तिसा मत्तुव्वसणं उणवि किलिट्ठा दुरन्तपलएण ।
मुत्तो उवप्पवादो छण्णो चन्दो अआलजलएहिं(१) ॥

(निःश्वस्य) हदासे, दुट्ठतावसि, अआलप्पउत्ता मेहमाला वसन्तसमअलच्छीं विअ लोअणाणन्ददाइणीं इमां अहिभविहीअ कं वा लाहं पेक्खसि ।

(१) समाश्वसिहि सखि, समाश्वसिहि । सर्व्वथा कदर्थनपरं दैवमस्माकं कृतकृत्यमिदानीं सम्पन्नम् । इयं खलु,
तीर्णा मृत्युव्यसनं पुनरपि क्लिष्टा दुरन्तप्रलयेन ।
मुक्त उपप्लवात् छन्नश्चन्द्रोऽकालजलदः ॥

भअवदि, परिव्वाइए, एसो दे सणेहसव्वस्सं जणो अहिभविज्जदि । रक्खसु दाव णं । कधं महा-भाओ सुहाअरो वि चिरेदि । किं दाणिं करामि मन्दभाइणी[१] । (इति रोदिति) ।

(ततः प्रविशति व्याकुलः सुधाकरः) ।

सुधा । (सत्वरमुपसृत्य) महाभागे, समाश्वसिहि समाश्वसिहि ।

आबध्य तां गाढममेध्यभावां
स्त्रीत्वादवध्यां परिशुद्धकारी ।
प्राप्तोऽहमेष प्रतिबुद्ध तन्मा-
मानन्दयेन्दुप्रतिमानने, त्वम् ॥

सुन्द । सहि, समस्सस समस्सस । एसो क्खु णिग्गही-हीअ दुट्टतावसीं संपत्तो महाभाओ । अहिनन्देहि दाव णं[२] ।

(१) हताशे, दुष्टतापसि, अकालप्रवृत्ता मेघमाला वसन्तसमयलक्ष्मीमिव लोचनानन्ददायिनीमिमामभिभूय कं वा लाभं पश्यसि । भगवति, परिव्राजिके, एष ते स्नेहसर्वस्वं जनोऽभिभूयते, रक्ष तावदेनाम् । कथं महाभागः सुधाकरोऽपि चिरयति । किमिदानीं करोमि मन्दभागिनी ।

(२) सखि, समाश्वसिहि समाश्वसिहि । एष खलु निगृह्य दुष्टतापसीं सम्प्राप्तो महाभागः । अभिनन्दय तावदेनम् ।

(कौमुदी प्रत्यागच्छति) ।

सुधा । सुन्दरि, दिष्ट्या वर्द्धसे ।

प्रत्यासन्ने सवितरि तमोमुच्यमानेव साक्षात्
किञ्चिन्मृत्यप्रकृतिमधुरा मर्त्यलोकस्य लक्ष्मीः ।
श्रान्तप्राये प्रलयसमये नूनमासन्नबोधा
स्निग्धच्छायारुचिरकरणा लक्ष्यते ते सखीयम् ॥

सुन्द । (सहर्षम्) जह भवं तक्केइ । णं पहाअकमलिनी विअ पप्फुल्लप्पाअवअणा क्खु पिअसही दीसइ[१] ।

कौमु । (उन्मील्य चक्षुषी) हला सुन्दरि, अविणाम उवसन्तमच्चाहिदं[२] ?

सुन्द । अधइं । इमिणा किल महाभाएण णिग्गहिहोअ संजमिदा सा दुट्ठतावसी, ता उत्थेहि[३] ।

कौमु । (स्वगतम्) मम्पि त्ति किं ण भणासि ? (प्रकाशम्) पच्चुज्जीविदा म्हि[४] । (इत्युत्तिष्ठति) ।

(१) यथा भवान् तर्कयति । ननु प्रभातकमलिनीव प्रफुल्लप्रायवदना खलु प्रियसखी दृश्यते ।

(२) अयि सुन्दरि, अपि नाम उपशान्तमत्याहितम् ?

(३) अथ किम्, अनेन किल महाभागेन निगृह्य संयमिता सा दुष्टतापसी, तदुत्तिष्ठ ।

(४) मामपीति किं न भणसि ? प्रत्युज्जीविताऽस्मि ।

सुन्द। ण क्खु एदेण वावारेण णादिकिलिट्ठो महा-
भाओ[१] ?

सुधा। (सस्मितम्) लब्धौषधः साम्प्रतमक्लिष्टोऽस्मि।

(कौमुदी लज्जते)।

सुन्द। णिव्वुदा म्हि[२]।

सुधा। (कौमुदीं प्रति) अपि प्रकृतिमापन्नानि तेऽङ्गानि ?

कौमु। महाभाअस्स प्पसाआदो[३]।

सुधा। प्रियं नः।

कौमु। हला सुन्दरि, इमिणा णिज्झरसीभरवस्सिणा कुसुमरेणुमन्थरेण मन्दमारुदेण पकिदित्था म्हि संवुत्ता। ता विण्णवेहि महाभाअं घरगमणस्स[४]।

सुधा। यद्येवं, लघु लघु प्रतिष्ठस्व।

(सर्व्वे उत्थाय परिक्रामन्ति)।

सुधा। अयमवरोहणमार्गः। शनैः शनैरवरोहतां भवत्यौ।

(१) न खल्वेतेन व्यापारेण नातिक्लिष्टो महाभागः ?

(२) निर्वृतास्मि।

(३) महाभागस्य प्रसादात्।

(४) अयि सुन्दरि, अनेन निर्झरशीकरवर्षिणा कुसुमरेणुमन्थरेण मन्दमारुतेन प्रकृतिस्थाऽस्मि संवृत्ता। तद्विज्ञापय महाभागं गृहगमनाय।

सुन्द। महाभाअ, अदिमत्तं काअरा क्खु एसा। ण अप्पणा ओरोढुं सक्कहिइ त्ति तक्केमि। ता णं ओलंबिदुं अरिहेइ महाभाओ[१]।

सुधा। तथा। (इति कौमुदीमवलम्बते)।

(सर्व्वे अवरोहणं नाटयन्ति)।

सुन्द। णं कदमेण उण पन्थिणा दाणिं गमिस्सामो[२]।

सुधा। नन्वमुनैव शूलपाणिमन्दिराभ्यर्णचरेण।

कौमु। वेवइ मे हिअअं[३]।

सुधा। अयि भीरु,

सुकोमलाङ्गी खलु मङ्गलार्हा
त्वं दैवतैरेव हि रक्षणीया।
वनान्तराले हि लता प्रसूता
न रक्ष्यते संहृतिभिर्मनुष्यैः॥

अपिच।

अस्य रूपस्य तन्वङ्गि, सुकुमारतरस्य ते।
परिणामः कथं नाम शोचनीयो भविष्यति ?

(१) महाभाग, अतिमात्रं कातरा खल्वेषा। नात्मना अवरोढुं शक्ष्यतीति तर्कयामि। तदेनामवलम्बितुमर्हति महाभागः।

(२) ननु कतमेन पुनः पथा इदानीं गमिष्यामः ?

(३) वेपते मे हृदयम्।

तदलमाशङ्कया । गच्छाग्रतः । सुन्दरि, त्वमपि सख्या-अग्रतोभव ।

सुन्द । तह[१] । (इति परिक्रामति) ।

(सर्व्वे परिक्रम्य निष्क्रान्ताः) ।

इति कौमुदीसुधाकरे तृतीयोऽङ्कः ॥०॥

---

(१) तथा ।

# चतुर्थोऽङ्कः ।

(ततः प्रविशतः पुष्पावचयमभिनयन्त्यौ चेट्यौ) ।

प्रथमा । हला कलहंसिए, जारिसो भट्टा तारिसी भट्टीणी त्ति जं सच्चं णिव्वुदं मे हिअअं । तुमं वा कहं मण्णसि[1] ?

द्वितीया । हला मअरन्दिए, किं इमम्मि मन्तव्वं । अवाच्चः क्खु विही संवुत्तो[2] ।

मक । एव्वं णेदं । दिट्ठिआ क्खु भट्टिणी अणुरूवं भत्तारं पत्ता । ण क्खु राअमन्ती वसुमित्तो भट्टा विअ गुणवन्तो[3] ।

कल । अधइं । (स्मितं कृत्वा) तह वि सो राअमन्ती[4] ।

(१) अयि कलहंसिके, यादृशोभर्त्ता तादृशी भट्टिनी इति यत् सत्यं निर्वृतं मे हृदयम् । त्वं वा कथं मन्यसे ?

(२) अयि मकरन्दिके, किमत्र मन्तव्यम् । अवाच्यः खलु विधिः संवृत्तः ।

(३) एवमिदम् । दिष्ट्या खलु भट्टिनी अनुरूपं भर्त्तारं प्राप्ता । न खलु राजमन्त्री वसुमित्रो भर्त्तेव गुणवान् ।

(४) अथकिम् । तथापि स राजमन्त्री ।

मक । ण क्खु धणरासी मणस्स रुइं उप्पादेइ महाणु-
हाआणं इत्थिआणं[१] ।

कल । किं भणासि ? ण क्खु दरिद्दत्तणं पत्थणिज्जं मण्णसि महाणुहाआणं? णं धणं ज्जेव्व रोअदि मणस्स । एत्थ दाव अम्हे ज्जेव्व णिअस्सणं[२] ।

मक । ण क्खु ण क्खु । मा दाव अम्हाणं रुइए महा-
णुहाआणं रुइं अणुमाउं अरिहेसि[३] ।

कल । (सवैलक्ष्यम्) सच्चं, अप्पाहिलासो क्खु अम्हेरिसो जनो महाणुहाआ उण विउलेहिं अहिलासेहिं आउलीकरीअन्ति । अदो ज्जेव्व ते महासआ, अम्हेरिसा उण खुद्दासआ त्ति भणीअन्ति[४] !

मक । (स्मितं कृत्वा) ण क्खु एव्वं पड़िवत्तुमरिहेसि । णि-
ग्गुणो भत्तारो धणवन्तो वि महाणुहाआणं इत्थि

(१) न खलु धनराशिर्मनसोरुचिमुत्पादयति महानुभावानां स्त्रीणाम् ।

(२) किं भणसि ? न खलु दरिद्रत्वं प्रार्थनीयं मन्यसे महानुभावानाम् ? ननु धनमेव रोचते मनसे । अत्र तावदावामेव निदर्शनम् ।

(३) न खलु न खलु । मा तावदस्माकं रुच्या महानुभावानां रुचिमनु-
मातुमर्हसि ।

(४) सत्यं, अल्पाभिलाषः खल्वस्मादृशो जनः, महानुभावाः पुनर्विपुलैरभि-
लाषैराकुलीक्रियन्ते । अतएव ते महाशयाः, अस्मादृशाः पुनः क्षुद्रा-
शया इति भण्यन्ते !

आणं पेम्मप्पदं ण होइ त्ति भणामि। अजुत्तव्वअ-हारी किल जणो ण मणे लग्गइ। मणो क्खु मूलं सुहस्स ण धणं[१]।

कल। को वा विप्पडिवज्जइ। ण क्खु राअमन्ती णिग्गुणो होइ त्ति तक्केमि[२]।

मक। सहि, ण जाणसि तं जिणा एव्वं भणसि। ण केअलं णिग्गुणो जाव दुग्गुणो क्खु सो[३]।

कल। अध भट्टारअभट्टिणीणं मज्झे कमदिसएण पसण्णभाअधेअं तक्केसि[४]?

मक। (स्मितं कृत्वा) तुमं वा कं तक्केसि[५]?

कल। जइ मं पुच्छसि, तइ अहिअभग्गवन्तो भट्टारओ[६]।

(१) न खल्वेवं प्रतिपत्तुमर्हसि। निर्गुणो भर्त्ता धनवानपि महानुभावानां स्त्रीणां प्रेमास्पदं न भवति इति भणामि। अयुक्तव्यवहारी किल जनो न मनसि लगति। मनः खलु मूलं सुखस्य न धनम्।

(२) कोवा विप्रतिपद्यते। न खलु राजमन्त्री निर्गुणो भवतीति तर्कयामि।

(३) सखि, न जानासि तं, येनैवं भणसि। न केवलं निर्गुणो यावद्दुर्गुणः खलु सः।

(४) अथ भट्टारकभट्टिन्योर्मध्ये कमतिशयेन प्रसन्नभागधेयं तर्कयसि?

(५) त्वं वा कं तर्कयसि?

(६) यदि मां पृच्छसि, तदा अधिकभाग्यवान् भट्टारकः।

मक। कधं विअ[१]?

कल। अलोअसामसउणा भट्टिणी कोमई[२]।

मक। णं भट्टारओ सुहाअरो वि अलोअसामसउणो ज्जेव्व[३]।

कल। दुक्करं क्खु सोआमणीजलहराणं सुन्देरविसेसणिव्वअणं, किं तु जो मे पच्चओ सो दे कहिओ[४]।

मक। साहु मसि तुमं[५]। (इति पुष्पावचयं नाटयतः)।

मक। हला कलहंसिए, जाणसि तुमं किं णिमित्तं भट्टिणीए पुप्फावअअस्स[६]।

कल। जाणमि। णेवच्छरअणा[७]।

मक। ता किं अप्पणो[८]?

(१) कथमिव ?

(२) अलोकसामान्यगुणा भट्टिनी कौमुदी।

(३) ननु भट्टारकः सुधाकरोऽप्यलोकसामान्यगुणएव।

(४) दुष्करं खलु सौदामनीजलधरयोः सौन्दर्य्यविशेषनिर्व्वचनम्। किन्तु यो मे प्रत्ययः स ते कथितः।

(५) साधु मन्यसे त्वम्।

(६) अयि कलहंसिके, जानासि त्वं किं निमित्तं भट्टिन्याः पुष्पावचयस्य ?

(७) जानामि। नेपथ्यरचना।

(८) तत् किमात्मनः ?

कल। ण दाव अप्पणो किं तु अज्जाए सुन्दरिए[१]।

मक। जुज्जदि। सा क्खु दोईअं उच्छसिअं भट्टिणीए[२]।

कल। अधइं। एत्थ उण णिमित्तन्तरं पि अत्थि[३]।

मक। किं त्ति[४]?

कल। भट्टिणी किल कुसुमणेवच्छेण अलं कदुअ अज्जसालंकाअणस्स तां पड़िवाएहिइ[५]।

मक। अम्म संविहाणअं भट्टिणीए! इमिणा क्खु संविहाणेण अणुरुवं भत्तारं पाविअ अज्जा सुन्दरी ण सुमरिहिइ सअणस्स[६]।

कल। ऐव्वं एदं[७]।

मक। हला कलहंसिए, किं त्ति महारिहं रअण-

---

(१) न तावदात्मनः, किन्तु आर्य्यायाः सुन्दर्य्याः।

(२) युज्यते। सा खलु द्वितीयमुच्छ्वसितं भट्टिन्याः।

(३) अथ किं। अत्र पुनर्निमित्तान्तरमप्यस्ति।

(४) किमिति?

(५) भट्टिनी किल कुसुमनेपथ्येनालङ्कृत्य आर्य्यसालङ्कायनाय तां प्रतिपादयिष्यति।

(६) अहो संविधानकं भट्टिन्याः? अनेन खलु संविधानेन अनुरूपं भर्त्तारं प्राप्य आर्य्या सुन्दरी न स्मरिष्यति स्वजनस्य।

(७) एवमेतत्।

णेवच्छं अदिक्कमिअ कुसुमणेवच्छे भट्टिणीए किदो बहुमाणो ? ण क्खु लोहो तहिं कालणं[1] ?

कल । (कर्णौ पिधाय) सन्तं पावं । तारिसीए महाणुहाआए कधं एरिसो लोहो संभवइ[2] ?

मक । ता कहेहि, कहिं णिमित्ते इमो आरम्भो त्ति[3] ?

कल । एव्वं किल भट्टिणी मण्णइ । सुकुमारस्स अङ्गस्स सुकुमारं ज्जेव्व णेवच्छं अहिअं सोहइ त्ति[4] ।

मक । (सभ्रूभङ्गम्) सो इमो अइसरिअज्जवन्ताणं कीलाप्पआरो[5] !

कल । एव्वं जं भणसि[6] ।

मक । (सासूयमिव) जइ सुकुमारस्स अङ्गस्स सुकुमणेवच्छं अहिअं सोहइ, ता किं त्ति सुलहेसुं कुसुमेसुं रअणालङ्कारस्स लोआ सोअन्ति[7] ?

(१) अयि कलहंसिके, किमिति महार्हं रत्ननेपथ्यमतिक्रम्य कुसुमनेपथ्ये भट्टिन्या कृतो बहुमानः ? न खलु लोभस्तत्र कारणम् ?

(२) शान्तं पापं । तादृश्या महानुभावायाः कथमीदृशोलोभः सम्भवति ?

(३) तत्कथय, कस्मिन् निमित्ते अयमारम्भइति ?

(४) एवं किल भट्टिनी मन्यते । सुकुमारस्याङ्गस्य सुकुमारमेव नेपथ्यमधिकं शोभते इति ।

(५) सोऽयमैश्वर्य्यवतां क्रीड़ाप्रकारः !

(६) एवं यद्भणसि ।

(७) यदि सुकुमारस्याङ्गस्य कुसुमनेपथ्यमधिकं शोभते, तत्किमिति सुलभेषु कुसुमेषु रत्नालङ्काराय लोकाः शोचन्ति ?

कल । अहाओ तत्थ कालणं[१] ।

मक । किं जस्स जं णत्थि तस्स तत्थ वहुमाणो[२] ?

कल । अधइं । किं ण पेक्खसि अन्धआरिदाए रत्तिए अप्पो बि दीबालोओ वहु मण्णिज्जइ, ण उण दिअहे[३] ।

मक । अविवेओ क्खु विहाआरो[४] ।

कल । कधं विअ[५] ?

मक । जो जं वहुमस्सइ सो तं ण लहइ, जो उण लहइ ण तस्स तत्थ वहुमाणो, जस्स इत्थं संविहाणअं[६] ।

कल । (स्मितं कृत्वा) तुमं उण कधं इच्छसि[७] ?

मक । जइ धणवन्ताणं धणं दरिद्दाणं ताणं च दरिद्दत्तणं

(१) अभावस्तत्र कारणम् ।

(२) किं यस्य यन्नास्ति तस्य तत्र बहुमानः ?

(३) अथ किं । किं न पश्यसि अन्धकारितायां रात्रौ अल्पोऽपि दीपालोको बहु मन्यते, न पुनर्दिवसे ।

(४) अविवेकः खलु विधाता ।

(५) कथमिव ?

(६) यो यद्बहु मन्यते स तन्न लभते, यः पुनर्लभते न तस्य तत्र बहुमानः, यस्येत्थं संविधानकम् ।

(७) त्वं पुनः कथमिच्छसि ?

धणवन्ताणं होज्जउ, तइ सोहणं संविहाणअं किदं होज्जउ[१]।

कल। (विहस्य) तुमं दाव विहाआरस्स कज्जसइवो होहि। ओहीरिअबहप्फइबुद्धिप्पहाआ क्खु दे बुद्धी[२]।

मक। अलाहि परिहासेण? जइ अहं विहाआरस्स कज्जसइवो होज्जमु, तइ एरिसं अणुइअं संविहाणअं णूणं अस्सहेस्सं[३]।

कल। जइ ण सहसि अलं कज्जसइवदाए, सअं ज्जेब्ब किं अस्साए ण समीहिदं करेसि[४]।

(नेपथ्ये गीयते)।

लडआलिङ्गिअ सुरही चुंविअ सुमुहं वसन्तलच्छीए।
मउणा समेइ सणिअं ललिअगई दाहिणो पअणो[५]॥

(१) यदि धनवतां धनं दरिद्राणां तेषाञ्च दरिद्रत्वं धनवतां भवेत्, तदा शोभनं संविधानकं कृतं भवेत्।

(२) त्वं तावद्विधातुः कार्य्यसचिवोभव। अवधीरितवृहस्पतिबुद्धिप्रभावा खलु ते बुद्धिः।

(३) अलं परिहासेन? यद्यहं विधातुः कार्य्यसचिवो भवेयं, तदेदृशमनुचितं संविधानकं नूनमन्यथयिष्ये।

(४) यदि न सहसे, अलं कार्य्यसचिवतया? स्वयमेव किमाज्ञया न समीहितं करोषि?

(५) लब्ध्वालिङ्ग्य सुरभिः चुम्बित्वा सुमुखं वसन्तलक्ष्म्याः।
मधुना समेति शनैर्ललितगतिर्दक्षिणः पवनः॥

कल । (कर्णं दत्त्वा) अए, एसा अज्जसालंकाअणसहिअस्स भत्तारस्स पावेसिई धुआ[१] ।

मक । हला कलहंसिए, कुदो दे इणमो पण्डिच्चं, जेण दे कहा वि ण बुज्झीअदि[२] ।

कल । (सस्मितम्) कधं विअ[३] ?

मक । भणाहि दाव का एसा धुआ णाम[४] ?

कल । (स्मितं कृत्वा) धुआ णाम गीदिविसेसो णडुस्स उवआरिणी, पत्तसूइआ क्खु सा होइ[५] ।

मक । (विहस्य) ता गीदी त्ति भणाहि, किं कहेसि धुआ धुआ त्ति[६] ।

(इति पुष्पावचयं नाटयतः । कलहंसिका स्मितं करोति) ।

कल । हला मअरन्दिए, अज्ज किल किम्पि अबुव्वं पेक्खणअं भत्तारस्स पुरदो अहिणीहिइ त्ति सुणी-

(१) अये, एषा आर्य्यसालङ्कायनसहितस्य भर्त्तुः प्रावेशिकी ध्रुवा ।

(२) अयि कलहंसिके, कुतस्ते इदं पाण्डित्यं, येन ते कथाऽपि न बुध्यते ।

(३) कथमिव ?

(४) भण तावत्का एषा ध्रुवा नाम ?

(५) ध्रुवा नाम गीतिविशेषः नाट्यस्योपकारिणी । पात्रसूचिका खलु सा भवति ।

(६) तद्गीतिरिति भण, किं कथयसि ध्रुवा ध्रुवेति ।

अदि। ता सिग्घं सिग्घं कुसुमाइं ओचिणुहि, जेण अम्हे वि तहिं सामाजिआओ होस्साम[१]।

मक। हला कलहंसिए, उणो वि पुच्छीअसि[२]।

कल। पुच्छ वीसद्धं जं सि पुच्छिदुआमा[३]।

मक। इमं पुच्छीअसि। किं पेक्खणअं णाम? को वा तस्स अहिणओ? किं वा तहिं सामाजिअत्तणं[४]।

कल। अइ उज्जुए, तं पि ण जाणासि? सुण, णट्ट विसेसो पेक्खणअं, अहिणओ उण अवत्थाणुआरो, जे क्खु एदं पेक्खन्ति ते सामाजिआ। जदो पेक्खीअदि, अदोज्जेव्व पेक्खणअं त्ति कहीअदि[५]।

(१) अयि मकरन्दिके, अद्य किल किमप्यपूर्व्वं प्रेक्षणकं भर्त्तुः पुरतोऽभिनेष्यते इति श्रूयते। तत् शीघ्रं शीघ्रं कुसुमान्यवचिनु, येनावामपि तत्र सामाजिके भविष्यावः।

(२) अयि कलहंसिके, पुनरपि पृच्छ्यसे।

(३) पृच्छ विश्रब्धं यदसि प्रष्टुकामा।

(४) इदं पृच्छ्यसे। किं प्रेक्षणकं नाम? को वा तस्य अभिनयः? किं वा तत्र सामाजिकत्वम्?

(५) अयि ऋजुके, तदपि न जानासि? शृणु, नाट्यविशेषः प्रेक्षणकं, अभिनयः पुनरवस्थाऽनुकारः, ये खल्वेतत् पश्यन्ति ते सामाजिकाः। यतः प्रेक्ष्यते, अतएव प्रेक्षणकमिति कथ्यते।

भ्रमक। (सहर्षम्) ता पेक्खिदव्वं क्खु इदं[१]। (इति पुष्पाण्यवचित्य निष्क्रान्ते)। (प्रवेशकः)।

(ततः प्रविशत्युपविष्टः सुधाकरः सालङ्कायनश्च)।

सुधा। ततस्ततः ?

साल। ततः सविनयमहमभ्यर्थितो भरतगोष्ठीगरिष्ठेन चन्द्रचूडेण।

सुधा। किमिति ?

साल। किमप्यपूर्व्वं प्रेक्षणकमस्मिन्नार्य्यसुधाकरस्य विवाहमहोत्सवे प्रयोक्तुमुद्यतावयं, तदाज्ञया भरतेष्वनुग्रहः क्रियतामिति।

सुधा। अपि ज्ञायते कस्तस्य कवयिता ?

साल। ज्ञायते। तेनैव कथितं, मम यवीयसो भ्रातुर्मित्रं विष्णुशर्म्मा नाम इति।

सुधा। स खलु नाट्यवेदनिपुणो विष्णुशर्म्मा ?

साल। अथ किम्।

सुधा। नूनमपूर्व्वं भविष्यति। तेन हि समादिश्यन्तां भरताः, वर्णिकापरिग्रहः क्रियताम्-इति।

साल। ननु समादिष्टाएव भरताः।

सुधा। (क्षणान्तरे) वयस्य, यत्सत्यं इदानीमपि हर्षविषादयोर्व्यतिकरमनुभवामि। कुतः ?

(१) तत् प्रेक्षितव्यं खल्विदम्।

अत्युच्चैर्भगवत्यनुग्रहवशाद्दैवानुकूल्यात्तथा
सिद्धिः सद्यदवाप्तिनिर्वृतिकरी प्राप्ता मया कौमुदी।
यत्सत्यं वपुषा समं मनसि मे नो माति हर्षोदयः
शङ्का किन्तु दुनोति हन्त कुटिलात् कापालिकादुत्कटा॥

साल। वयस्य, अलमात्मानं खेदयित्वा। दैवमस्मभ्यं स्वस्ति करिष्यति। पश्य,

आपज्जालादपि सुमहतो दुर्विलङ्घ्य प्रकोपा-
द्दैवं तावत् प्रभवति परं रक्षितुं रक्ष्यवस्तु।
और्व्वाग्निः किल जलनिधेस्तुङ्गतुङ्गैस्तरङ्गै-
र्व्याप्तो दारुव्यतिकरमृतेऽप्युज्ज्वलं जाज्वलीति॥

अपिच,

अपि व्यतिकरक्लिष्टः प्रवृद्धजलदावलेः।
चन्द्रचन्द्रिकयोर्योगो म्लायते न तु लुप्यते॥

नटः। (प्रविश्य)।

यस्याः कटाक्षमात्रेण विरूपाक्षोऽपि शिक्षितः।
विम्बाधररसार्थित्वं तां नमामि गिरीन्द्रजाम्॥

सुधा। अष्टपदेयं नान्दी।

नटः। तत्रभवतोविष्णुशर्म्मणः कृतिः कौमुदीपरिणयं नाम प्रेक्षणकं प्रयोक्ष्यते, तत्र भवद्भिर्दीयमानमवधानमभ्यर्थये।

सुधा । वयस्य, उभयथाऽप्येतदाप्यायनमस्माकम् ।

साल । एवं यदात्थ ।

नटः । एतत्कविः किल,

शिरसा प्रणिपत्य सादरं
भवतः प्रार्थयते सभासदः ।
परिपश्यत भोः कृतिं नवां
सुकुमारामिव पुष्करस्रजम् ॥

अस्मास्विदं प्रेक्षणकं निःक्षिपता च कविनेदमभिहितम,

दोषारोपकलङ्कितान्यवचसस्तिष्ठन्तु दुष्टाशयाः
सन्तः सन्त्यनृतैर्गुणैरपि परं प्रोत्साहयन्तो भुवि ।
गङ्गास्वच्छजलं करोत्यतितरां दुष्पेयमम्भोनिधि-
र्गङ्गा नड्वलतोयमुत्तमरसं सम्पादयत्यागतम् ॥

( नेपथ्ये )

आः दुरात्मन्, अलीकवाचाल, भरतपुत्र, कथं व्यलीकवादिनः स्तुवन् पौरुषञ्च निन्दन् न लज्जसे ? महत् खल्वेतत् पौरुषं नाम, यदसताऽपि दोषेण परवचसस्तिरस्करणम् । शृणु रे, शृणु,

आरोप्य दोषमपदोषमपीह वाच्यं
कर्त्तुं क्षमो भवति सूक्ष्ममतिः क्षणेन ।

प्रत्येति जातु न खलु स्फुरतोऽपि दोषा-
नन्धः पदार्थनिवहानिव मुग्धबुद्धिः ॥

अपिच। रे मूर्ख,

प्रसन्नमम्भोऽपि तटप्रपातः
समाविलं यत्कुरुते क्षणेन।
तदस्य लोके महिमैव भूयान्
प्रतीयते वेत्तु कएनमर्थम् ॥

(नटोनेपथ्याभिमुखमवलोकयति)।

सुधा। कः पुनरेष धृष्टो यो निन्दितमपि महत् पौरुषं प्रत्येति ?

साल। नैतावता परिच्छेत्तुं शक्नोमि। उत्तरं तावत् प्रतीक्षस्व।

नटः। (निरूप्य ससम्भ्रमम्) अये! महाननर्थः समापतितः। अयं खलु,

मकरणइव दर्पैः दृश्यमानोऽतिलक्ष्म्या
नयपरिचयगर्व्वोऽन्यायमार्गैकनिष्ठः।
निवसतिरपि धाम्नां लोकसन्तापनानां
प्रविशति वसुमित्रो मित्रवर्गैः समेतः ॥

तन्न युक्तमत्रावस्थातुम्। (इति निष्क्रान्तः)। (प्रस्तावना)।

सुधा। वयस्य, नयप्रवीणोऽयं वसुमित्रइति श्रूयते। तत्कोऽयमस्य बुद्धिभ्रमः ?

साल। वयस्य, स्वभावदुष्टाशयः खल्वसौ। तत् किमत्र चित्रम्। पश्य,

नैवात्मनो न च परस्य सुखोदयाय
स्वभ्यर्हितोऽपि खलु संश्रयदोषहेतोः।
दुष्टाशयस्य गुणराशिरपि प्रकामः
क्लीवस्य रूपमिव निष्फलइत्यवैमि॥

(ततः प्रविशति सदर्पं परिक्रामन् मित्रवर्गानुगतो वसुमित्रः)।

वसु। (साटोपम्) दृष्टा युष्माभिर्धृष्टता भरतपुत्रस्य? (सभ्रूभङ्गम्) किमाह भरतपुत्रः, असताऽपि दोषेण विशुद्धमपि वस्तु दूषयन् बुद्धिमतामग्रणीर्दुष्टाशयः, अलीकगुणेन स्तुवन् लघुचेताः पुनः साधुः! (विहस्य)। (आरोप्य दोषमिति, प्रसन्नमम्भोऽपीति च पुनः पठित्वा) वयस्य, कुम्भमुख, कथं मन्यसे?

कुम्भ। किमत्र मन्तव्यम्। त्वद्वचसामुपरि कोवक्तुं समर्थो मनुष्यलोके?

दर्पसन्धः। (सक्रोधम्) किमुच्यते, मनुष्यलोके, इति। ननु देवलोकेऽपि, इति भणितव्यम्।

सुधा। (स्वगतम्) अहो गर्व्वप्रकारः!

कुम्भ। नात्र मम विप्रतिपत्तिः।

वसु। (विहस्य) सर्व्वः खलु कोविदमात्मीयं मन्यते।

(दम्भमयं विलोक्य) सखे, कथमिदं मौनव्रतम् ?

दम्भ । किं करीअदु[१] ।

वसु । कथ्यतां यस्ते सर्गः ।

दम्भ । जइ मं पुच्छसि, तइ अलीअगुणेण तुअन्तस्स लहुचेदो त्ति ण उण पज्जत्तं विसेसणम्[२] ।

वसु । कथं पुनः पर्य्याप्तं भवति ?

इतरौ । (सस्मितम्) नूनमधुना तिरस्कृतो बृहस्पतिर्भविष्यति ।

दम्भ । (सगर्व्वम्) कधं णाम पज्जत्तं होहिइ । लहुचेदो, भीलुअेा, क्खुद्दासअेा, मुक्खो, वालिसो त्ति सअसो बि वुच्चीअमाणं विसेसणं ण पज्जत्तं होइ[३] ।

(सर्व्वे हसन्ति) ।

वसु । साधु दम्भमय, साधु । स्थाने खलु मदयस्योऽसि ।

दम्भ । (इतरौ प्रति सगर्व्वम्) पेक्खह तिरक्किदो भअप्फई ण वा[४] ।

---

(१) किं क्रियताम् ?

(२) यदि मां पृच्छसि, तदा अलीकगुणेन स्तुवतो लघुचेता इति न पुनः पर्य्याप्तं विशेषणम् ।

(३) कथं नाम पर्य्याप्तं भविष्यति । लघुचेताः, भीरुकः, क्षुद्राशयः, मूर्खः, बालिशः,—इति शतशोऽप्युच्यमानं विशेषणं न पर्य्याप्तं भवति ।

(४) पश्यतं तिरस्कृतो बृहस्पतिर्न वा ।

सुधा। (स्वगतम्) अहो धार्ष्ट्यम्!

वसु। तिष्ठतु तावदेतत्। श्रुतं युष्माभिर्दौर्ज्जन्यं पुण्यकीर्त्तेः? यः कौमुदीं याचमानमपि मां प्रत्याचष्टे।

कुम्भ। श्रुतम्। किं क्रियताम्? क्षुद्रः खल्वेषः।

दर्प। (सगर्व्वम्) किमुच्यते, किं क्रियताम्,—इति? ननु यदेव रोचते, तदेव क्रियताम्। कोऽत्र प्रतीपयिता? राजमन्त्री खल्वेषः।

दम्भ। राश्रा त्ति भणाहि। णाममत्तेण क्खु राश्रा वीरश्राङ्ग(१)।

कुम्भ। सम्यगभिहितम्। किमन्यत्, निगृह्यैव पुण्यकीर्त्तिं कौमुदी ग्रहीतव्या।

सुधा। अहो साहसरुचिता पापानाम्।

वसु। नैतदतिपुष्कलं भवति।

कुम्भ। कथमिव?

वसु। अमुमर्थमाशङ्क्य तेन दुष्टवटुना महाराजो विज्ञापितः। स च तस्मै अभयं प्रतिश्रुत्य मामाज्ञप्तवान्।

दर्प। किमिति?

वसु। न खलु रक्षाधिकृतानां दोषमन्तरेण प्रजास्वपकर्त्तुमुत्सहन्ते साहसिकाः। त्वन्तावदप्रमत्तो भव,

---

(१) राजेति भण। नाममात्रेण खलु राजा वीरवाङ्गः।

यथा न कोऽप्यार्य्यस्य पुण्यकीर्त्तेः किमप्यत्याहितं करोति,—इति । विपर्य्यये पुनर्नियतस्ते दण्डः । सोऽयमादेशो देवस्य ।

कुम्भ । (सावज्ञम्) भवन्तमन्तरेण राज्ञः स्पन्दितुमपि नास्ति सामर्थ्यम्। कथं सएव त्वां दण्डयेत्? अश्र-द्धेयमेतत् ।

दर्प । किं वहुना? यद्यनुमन्यसे, नातिचिरान्निगृह्य वीरवाहुं त्वामेवाधिराज्यमारोपयामः ।

सुधा । धिक् दुर्ज्जनानाम्, ये प्रभुमपि हन्तुमिच्छन्ति।

वसु । (विचिन्त्य) मा मैवम् । अपि नाम,

परिभवकलुषाणां राजधाम्नां महत्त्वं
किमपि किमपि गूढं दुर्विलक्ष्यं समस्ति ।
दहनइव तृणैरप्याहतो भस्मगुप्तः
क्षितिपतिरविरोधं तत्क्षणं दन्दहीति ॥

अपिच,

विपश्चितोनीतिकथासु दक्षाः
वीराश्च विद्रावितशत्रुपक्षाः ।
आज्ञाविधेयाः किल यस्य सर्व्वे
सामान्यलोकोन स लोकनाथः ॥

सुधा । साधु वसुमित्र, साधु । स्वपदोचितमिदानीं मन्त्रितवानसि ।

कुम्भ । आः केयमलीकाशङ्का? हस्त्यश्वरथपादातं सर्व्वमेव बलं तवाधीनम्। अनिच्छाप्रतिरुद्धानि नः श्रेयांसि ।

दम्भ । सोहणं मन्तेइ कुम्भमुहो[१] ।

वसु । (निःश्वस्य) वयस्य, न जानासि राजकुलवृत्तान्तं, येनैवं भणसि । सर्व्वमेव तन्त्रमाकुलीभूतम् । न खल्विदानीं पूर्व्वमिव मय्यनुरागो देवस्य । स खलु स्वयमेव तन्त्रमालोचयति ।

दर्प । कः पुनरत्रोपायो भवेत्? न खलु कौमुदीमन्तरेण शक्ष्यसि जीवितमवलम्बितुम् ।

वसु । एवं यदात्थ । उपायं पुनर्न पश्यामि ।

दम्भ । (विहस्य) भो वअस्स, जइ एव्वं, जोअं आलंवेहि[२] ।

वसु । (सहर्षम्) सम्यक् स्मारितोऽस्मि ।

कुम्भ । किमिति?

वसु । योऽसौ योगसिद्धः खण्डमुण्डोनाम कापालिकः, विदितप्रभावोऽवारितव्यवसायश्चासौ देवस्य । तेनैव तावत् समीहितं करिष्ये । अस्ति च तस्य अस्मासु पक्षपातः ।

---

(१) शोभनं मन्त्रयते कुम्भमुखः ।

(२) भो वयस्य, यद्येवं, योगमवलम्बस्व ।

दम्भ । अव्वाहदं मन्तं एदं(१) ।

इतरौ । अहो बुद्धिकौशलं वयस्यस्य ।

वसु । तदाकार्य्यतां तपोनिधिः ।

सुधा । धिक् पाषण्डानाम् ।

दम्भ । णं आआरिदो ज्जेव्व सो भवदा रस्सो वस्सदा-मुप्पादेदुम्(२) ।

वसु । आं स्मृतम् । अपसर्पः खलु मयैव प्रेषितः । पर्य्याकुलत्वात्तु चेतसो न पुनरनुस्मृतम् ।

(नेपथ्ये)

परस्त्रीभिः सार्द्धं परिचितकलाभिर्युवतिभिः
सुराभिर्मांसैर्व्वा सरसमधुरैर्मीनशकलैः ।
समुद्रा चोपास्तिः फलमपि च मोक्षो न चिरतो-
ध्रुवं कौलोधर्म्मो जयति किल शम्भोरभिमतः ॥

वसु । (सहर्षम्) अयमुपस्थितो भगवान् कापालिकः । आसनमासनमत्रभवतः ।

सुधा । अहो वीभत्सा वाचोयुक्तिः ।

(प्रविश्य आसनं स्थापयित्वा निष्क्रान्तः परिजनः) ।

(ततः प्रविशति कापालिकः । सर्व्वे उत्तिष्ठन्ति) ।

(१) अव्याहृतं मन्त्रमेतत् ।

(२) नन्वाकारितएव स भवता राज्ञोवश्यतामुत्पादयितुम्

वसु । भगवन्नमस्ते (इति प्रणम्य) इदमासनमास्यताम् ।
(इत्यासनं दर्शयति । सर्व्वे प्रणमन्ति) ।

कापा । (उपविश्य)

आलिङ्गितः पुलकिताञ्चितया सलीलं
लङ्केश्वरव्यतिकरादचलेन्द्रपुत्र्या ।
साचीकृताननमनल्पविलासजालं
निर्व्वाणवानवतु वो नवचन्द्रमौलिः ॥

यूयमप्युपविशत ।

(सर्व्वे उपविशन्ति) ।

कापा । किमर्थं पुनरहमाहूतः ?

वसु । भगवतश्चरणवन्दनेनात्मानं कृतार्थीकर्त्तुम् ।

कापा । (स्मितं कृत्वा) अलं प्रश्रयेण ? कथ्यतामर्थः ।

वसु । नन्वेष शिरसा प्रणिपत्य विज्ञापयामि । रक्षणीयः खलु शिष्यजनो गुरुभिरित्यस्ति नो विज्ञापनाऽवकाशः ।

कापा । वत्स, अलमाशङ्कया ? कथ्यतां, कुतो रक्षितव्य इति ।

कुम्भ । भगवन्, महतो व्यसनात् ।

कापा । (सविस्मयं वसुमित्रं प्रति) न खलु परिहासोऽयम् ?

वसु । (सविनयम्) भगवन्, न खलु परिहासः । यदाह कुम्भमुखः ।

कापा। (सविषादम्) वत्स, तवापि व्यसनमिति यत्सत्यं विषीदति मे चेतः।

वसु। जानाम्यनुग्रहं तपोनिधेः।

कापा। कथ्यतां किं व्यसनमुपस्थितम्?

दर्प। अपि श्रुतिमुपगतो भगवतो कौमुदीवृत्तान्तः?

कापा। श्रुतोऽस्माभिः। किं तस्य?

कुम्भ। प्रात्यख्यातः पुण्यकीर्त्तिना वयस्यः।

कापा। कस्य हेतोः?

कुम्भ। सुधाकराय तां दास्यतीति।

कापा। (विहस्य) धिक् पुण्यकीर्त्तिम्। यो वसुमित्रमतिक्रम्य वटवे सुधाकराय कौमुदीं दातुमिच्छति। (विमृश्य) भवतु। यद्येवं, निगृह्य पुण्यकीर्त्तिं गृह्यतामेषा।

सुधा। अहो पापाभिसन्धिः।

कुम्भ। राज्ञा चाभयन्तस्मै प्रतिश्रुतम्।

काका। आः क एष राजा नाम वसुमित्रस्याग्रे?

दर्पः। (सहर्षम्) वयमप्येवं कथयामः। विप्रतिपन्नः खल्वत्र वयस्यः।

कापा। (वसुमित्रं प्रति) वत्स, किं सुहृद्वाक्येषु विप्रतिपद्यसे?

वसु। भगवन्, अन्यदपि श्रोतव्यमस्ति।

कापा । कथ्यताम् ।

वसु । (कर्णे एवमेवम्) ।

कापा । (विचिन्त्य) तर्हि त्यज्यतामयं प्रणयः ।

वसु । भगवन, अशक्यः खल्वेष त्यक्तुम् ।

कापा । कथमिच्छसि ?

कुम्भ । (कर्णे एवमेवम्) ।

कापा । (वसुमित्रं प्रति) त्वमपि चिन्तय । (स्वगतम्) एवं ममाभिलाषो न सिध्यति । अनुवर्त्तनीयश्च राजमन्त्री वसुमित्रः । अथवा, किमिदानीं वसुमित्रस्यानुवर्त्तनेन । यथाऽयं भणति, तथा तर्कयामि भ्रष्टप्रायोऽस्याधिकारः,—इति । (विभाव्य) को दैवस्याभिप्रायमवगच्छतु । एवमिदानीमुपेक्षितोऽयं यदि स्वाधिकारएव तिष्ठेत्, कष्टमस्मानापतिष्यति । भवतु । अनुवर्त्तनीयोऽस्य च्छन्दः । अपिच । एवमपि दुष्टवटोः सुधाकरस्यापकृतं भवति । महत् खल्वेतत्परितोषस्थानम् । तथाहि,

स्वार्थाविरोधेन परस्य साक्षा-
दनिष्टपातो यदि तन्महत्त्वम् ।
अशक्यतायामुभयोर्महान्तो-
वाञ्छन्ति शत्रोरपकारमेव ॥

अपकारो न कर्त्तव्यः शत्रोरपि कदाचन।
अयं कापुरुषैरेव प्रवादो बहु मन्यते॥

वसु। चिन्तितमस्माभिः। भगवतः करुणा चेदयमेव तावत् सुकरः पन्थाः।

कापा। यद्येवं, त्यज्यतां विषादः। यतिष्ये भवतः समीहितसिद्धये।

वसु। अनुगृहीतोऽस्मि।

कापा। (सगर्व्वम्) वत्स, अलं बहु विकत्थया। कथयामि ते भूतार्थम्।

अचिरेणैव कालेन कौमुद्या योक्ष्यते वटुः।
भवान् वृथापरिश्रान्तः केवलं परितप्स्यते॥

(सर्व्वे विषण्णाः स्थिताः)।

सुधा। वयस्य, सुष्ठु खल्विदमुच्यते, दैवप्रेरितानि भवन्ति वचांसि,—इति।

साल। अथकिम्।

एकमर्थं विवक्षुर्यदनीशइव भाषते।
अर्थमन्यमसामान्यं दैवस्यैतद्विजृम्भितम्॥

अत्र तावदयमेव निदर्शनम्।

वसु। (निःश्वस्य) असङ्गतमिव भगवतो वचनम्।

कापा। (स्वगतम्) अहो प्रमादः! कथं मुग्धेनेव मया एकं

वक्तुमिच्छता अन्यदेवोक्तम्। भवत्वेवं तावत्।
(प्रकाशम्) वत्स, न खल्वसङ्गतम्। ननु ब्रवीमि,

अचिरेणैव कालेन कौमुद्या योक्ष्यते भवान्।
वटुर्वृथापरिश्रान्तः केवलं परितप्स्यते॥

(इति तदेव व्यत्यस्य पठति)।

(सर्व्वे हर्षं नाटयन्ति)।

वसु। सङ्गतमिदानीम्।

कापा (सगर्व्वम्) वत्स, किमनेन स्खलद्गतेर्वचसः सङ्गता-सङ्गतत्वविचारेण? नन्वचिरादेव,

अभिनवपरिहासप्रौढ़रागालसाक्ष्या
व्यतिकरमुपयान्त्या भीक्षियोर्मीलिताक्ष्या।
तरलभुजलतासंश्लिष्टकण्ठान्तरालं
विगणय निजमङ्गं सङ्गतं भोस्तयैव॥

सुधा। आः पाप, अलीकवाचाल, एवं जल्पतस्ते कथं शतधा न दीर्य्यते जिह्वा?

वसु। किं दुष्करं भगवदनुग्रहेण।

साल। (स्वगतम्) कथमन्यादृश इव दृश्यते वयस्यः।

कापा। अयमहमिदानीम्,

आक्रन्दिताश्रुजलसिक्तमुखेन्दुबिम्बां
लङ्केश्वरो रघुपतेरिव धर्म्मपत्नीम्।

तामाविलाञ्चकलुषामवशां हरिष्ये
शक्नोति यः स खलु रचतु तत्सपक्षः ॥

(इत्युत्तिष्ठति । सर्व्वे प्रणमन्ति) ।

सुधा । (सकोपम्) अरे रे पाषण्ड,

राहोरिव कलां चान्द्रीं तां तन्वीमुपपुप्लुषोः ।
यथा क्रान्तिविपर्य्यासः प्रतीपस्ते सुधाकरः ॥

(इत्युत्थातुमिच्छति) ।

कापा । एकं तावत् प्रत्युपकारमस्माकं करिष्यसि ।

वसु । विधेयोऽस्मि भगवतः ।

(कापालिकः परिक्रम्य निष्क्रान्तः । सुधाकर उत्तिष्ठति) ।

साल । (सुधाकरं निवार्य्य) वयस्य, कोऽयमस्थाने संरम्भः? ननु प्रेक्षणकमिदम् ।

सुधा । (प्रकृतिस्थः सलज्जम्) कथं प्रेक्षणकमिदम्! मया पुनर्ज्ञातं सत्यमेव प्रियामपहर्त्तुं पापानामारम्भः इति ।

साल । विस्मरतु तावदभिनयचातुर्य्यं भरतानाम् ।

सुधा । नूनमतीत्य वचसां विषयं वर्त्तते ।

वसु । अपिनाम कृतार्थः कापालिको भवेत्?

कुम्भ । कः संशयः?

दम्भ। मा संसग्रं करेहि। अविइन्तणिज्जप्पहाओ क्खु जोआआरो सुणीअदी[१]।

कुम्भ। अलमनेन क्लैव्येन? गर्व्वभूयांसः खलु सत्-पुरुषा भवन्ति।

वसु। (स्मितं कृत्वा) एवं यदात्थ। कौमुदी परमस्मान् व्यथयति।

कुम्भ। अचिरात् सुखयिष्यति।

दर्प। सत्यवचनो भव।

कुम्भ। किमिदानीं सत्यवचनो भविष्यामि? ब्राह्मण-जातिः खल्वहम्। यदुत्पन्नेन भृगुना पुरुषोत्तमवक्ष-स्यपि कृतश्चरणप्रहारः, कुम्भोद्भवेन च मुनिना पीतः पयोनिधिः।

वसु। (सस्मितम्) गृहीतं ब्राह्मणवचः।

दम्भ। (विहस्य) सुरहुणीबाणम्पि किं ओसिसीअदि[२]।

कुम्भ। (सक्रोधम्) किमलीकमिदमुपन्यस्यते?

दम्भ। कधं अलीअं णाम? जस्स तुमं अज्जवि पच्चक्खं पमाणं[३]।

---

(१) मा संशयं कुरु। अविचिन्तनीयप्रभावः खलु योगाचारः श्रूयते।

(२) सुरधुनीपानमपि किमवशिष्यते।

(३) कथमलीकं नाम? यस्य त्वमद्यापि प्रत्यक्षं प्रमाणम्।

कुम्भ ।कथं महर्षीनपि न प्रमाणयसि ?

दम्भ । धी मुक्ख ! जइ महस्सिणो पमाणं, कधं एत्ति-
एण तुमम्पि णाम विअत्थेसि ? पअणअणअस्पद्-
धाए पाराआरमुत्तिईस्सुणो उप्पदन्दे वालआणरस्स
कधं ण सुमरेसि[१] ?

कुम्भ । ननु रे पाषण्ड, वयस्यत्वात् सोढमेतावत् ।
तदतः परं न सहिष्ये ।

दम्भ । ण क्खु बम्हतेएण मं भप्पसा कुणहिसि[२] !

वसु । आः कोऽयमस्थाने कलहो भवतोः ?

कुम्भ । तिष्ठ रे तिष्ठ, न त्वां क्षमिष्ये ।

वसु । अलमलमात्मकलहेन ? निवर्त्ततां भवन्तौ ।

(नेपथ्ये)

एकाकिनीमुपवनान्तलताविताने
द्राक् कौमुदीं भ्रमतिप्रसभं जिघृक्षुः ।

(सर्व्वे आकर्णयन्ति) ।

दप । नूनमिदं तत्रभवतः कापालिकस्य पौरुषं विजृ-
म्भते ।

---

(१) धिङ्मूर्ख ! यदि महर्षयः प्रमाणं, कथमेतावता त्वमपि नाम विकत्थसे ? पवनतनयस्पर्द्धया पारावारमुत्तितीर्षोरुत्पततो वालवानरस्य कथं न स्मरसि ?

(२) न खलु ब्रह्मतेजसा मां भस्मसात् करिष्यसि ।

सुधाकरवसुमित्रौ । किमतः परं वक्ष्यति ?

दर्प । किमपरम् ? सिद्धमनोरथमात्मानमभिनन्दस्व । नखल्वकृतार्थः कापालिको निवर्त्तिष्यते ।

कुम्भ । अलं सन्देहेन ? न खल्वनृतं मे वचनं भविष्यति ।

(पुनर्नेपथ्ये) ।

आश्चर्य्यमाश्चर्य्यम् !

कापालिकः प्रलयलङ्घितएष शेते
साऽप्यालयं गतवती विगतारिशङ्का ॥

( सर्व्वे विषसाः स्थिताः ) ।

सुधा । नूनमयं मुद्राप्रभावः ।

साल । कथमन्यथा निर्निमित्तः प्रलयोदयः ?

दम्भ । तं एदं सच्चवाइत्तणं भवदो(१) ।

वसु । (निःश्वस्य) हा हतोऽस्मि मन्दभाग्यः ।

कुम्भ । अलं विषादेन ? वयमेव तां गृह्णीमः ।

वसु । चिन्त्यतां परिणामः । ननु प्रतीपो देवादेशः ।

कुम्भ । आः कोऽयं देवादेशोनाम ?

दर्प । (सगर्व्वम्) परिणामदर्शित्वं नाम कापुरुषत्वस्य नामान्तरम् । नेदं भवादृशेषु सत्पुरुषेषु शोभते ।

(१) तदेतत् सत्यवादित्वं भवतः ।

कुम्भ । प्रथमः कल्पः । वीरपुरुषोचितं वचनं दर्पसन्धस्य ।

दम्भ । वीरा किल इत्थं ण वीहंति[1] ।

वसु । यद्येवं, कार्यसिद्धये प्रतिष्ठामहे ।

(सर्व्वे उत्तिष्ठन्ति) ।

(नेपथ्ये) ।

सुधाकरं प्रपन्नैषा गुरुणैवोपपादिता ।
अविघ्नं कौमुदी साक्षादभिभूय तमः परम् ॥

वसु । (सक्रोधम्) अरे रे दुष्टवटो, मृगेन्द्रहस्तादाच्छिद्य मृगीं ग्रहीतुमिच्छसि । नन्वेष न भवसि ।

एष त्वामग्रतो हत्वा प्रतिपत्स्ये मनस्विनीम् ।
अस्ताचलमनुप्राप्ते रवौ दीप्तिमिवानलः ॥

(इत्युद्धतं परिक्रामति) ।

दम्भ । भो वयस्स, ण क्खु गहीदुं इच्छइ[2] ।

वसु । किन्तर्हि ?

दम्भ । णं अग्गहीदेव्व[3] ।

(पुनर्नेपथ्ये) ।

कापालिकं यतिकुलैककलङ्कमुच्चै-

(१) वीराः किलेत्थं न विभ्यति ।
(२) भो वयस्य, न खलु ग्रहीतुमिच्छति ।
(३) नन्वग्रहीदेव ।

सर्व्वाविलच वसुमित्रममित्रलोकम्।
आहत्य वामचरणेन गता खकान्तं
सा कीर्त्तिवासमिव गोपसुता गिरीशम्॥

वसु। आः पाप, वृथा स्तुतिपाठक, नन्वयमहम्,
असुधाकरमापाद्य जगदद्य न संशयः।
गृहीष्ये कौमुदीं साचादच्लोभं प्रियसाहसः॥
(सर्व्वे परिक्रामन्ति)।

कुम्भ। (नेपथ्याभिमुखमवलोक्य)। एहि तीक्ष्णदंष्ट्र, एहि।
(ततः प्रविशति सुन्दरकः। सर्व्वे विस्मितास्तिष्ठन्ति)।

वसु। (स्वगतम्) कथं सुन्दरकः!

सुन्द। जेदु जेदु अमच्चो[१]।

वसु। सुन्दरक, किमागमनकारणम्?

सुन्द। भट्टारअस्स अखत्ती[२]।

वसु। (सहर्षम्) किं देवो मामाह्वयति?

सुन्द। ण क्खु ण क्खु[३]।

वसु। (साशङ्कम्) का तर्ह्याज्ञप्तिः?

सुन्द। इदं अणापत्तं अमच्चं गहीदत्थं कुणहिइ[४]।
(इति पत्रमर्पयति)।

(१) जयतु जयतु अमात्यः।
(२) भट्टारकस्याज्ञप्तिः।
(३) न खलु न खलु।
(४) इदमाज्ञापत्रममात्यं गृहीतार्थं करिष्यति।

वसु। (पत्रं गृहीत्वा वाचयति) परमेश्वरः समाज्ञापयति। विदितमेतद्युष्माकम्, आज्ञाभङ्गं न सहन्ते नरेन्द्राः—इति। तथापि पैतृकस्त्वममात्यः—इति क्षान्तमस्माभिर्बहुशः। साम्प्रतं पुनरनेकशो निवार्य्यमाणोऽप्यार्य्यपुण्यकीर्त्तिमधिकृत्य यमविनयमकार्षीः, नासौ क्षन्तुमर्हः। राजपुरुषाणां विशेषतस्त्वमात्यानां खल्वीदृशोऽविनयः सर्व्वमेव प्रकृतिमण्डलमाकुलयति। तदिदानीमप्यनुग्रहबुद्ध्यैवास्माभिरादिश्यसे, सकलद्रव्यमादायाविलम्बमितः प्रस्थीयताम्। श्वः खल्ववसुमित्रं राष्ट्रमिच्छामि;—इति।

(सर्व्वे विषसास्तिष्ठन्ति)।

सुधा। (सविषादम्) हन्त हतोऽधिकारः!

साल। कुतः पुनरत्र विषादः? उचितमेवैतत्।

सुधा। (सकरुणम्) वयस्य, मा मैवम्।

अधिकारपरिभ्रंशो मृत्युरेवाधिकारिणाम्।
विशीर्य्यते पुष्पराशिर्मरुता हृतसौरभः॥

साल। ननु मृत्युमप्यर्हत्येष वैधेयः।

सुधा। अलमसदभिनिवेशेन। आपन्नानुकम्पा हि महाव्रतम्।

सुन्द । सेणापई विसवेदि, सोग्धं अणुचिट्ठीअदु भट्टार-
आदेसो त्ति[१] ।

वसु । (स्वगतम्) का गतिः ? (प्रकाशम्) विज्ञाप्यतां सेनापतिरेष देवादेशोऽनुष्ठीयते इति । अपिच, मद्वचनाद्विज्ञापयितव्यस्त्वया देवः ।

वसुमित्रेण देवानामाज्ञैषा शिरसा धृता ।
क्षम्यतामपराधोऽयं प्रणयस्तस्य पश्चिमः ॥

सुन्द । जं अमच्चो अणवेदि[२] । (इति प्रणम्य निष्क्रान्तः) ।

वसु । (सनिर्वेदम्) ।

क्षणेन रङ्कोऽपि नृपत्वमेति
नृपोऽपि रङ्कत्वसमार्ज्जनीयम् ।
हा धिक् कृतान्तस्य विलासमुच्चै-
स्तथापि न प्राणभृतां प्रबोधः ॥

तदेत, देवादेशमनुतिष्ठामः । (इति परिक्रम्य निष्क्रान्ताः सर्व्वे ।

(इति कौमुदीपरिणयो नाम गर्भाङ्कः) ।

सुधा । वयस्य, यत्सत्यमनेन वसुमित्रवृत्तान्तेन दुर्म्मनायितोऽस्मि । स खलु,

अलभत न स्पृहनीयं भ्रष्टः स्वपदाद्विडम्बितोऽप्यभवत् ।
सांयात्रिकइव जलधौ निमग्नपोतोऽथ रचितो दैवात् ॥

(१) सेनापतिर्विज्ञापयति, शीघ्रमनुष्ठीयतां भट्टारकादेश इति ।

(२) यदमात्य आज्ञापयति ।

साल । अलमपकारिणः करुणया । (नेपथ्याभिमुखमवलोक्य) कः पुनरयमागच्छति ?

(ततः प्रविशति चेटी) ।

चेटी । (प्रणम्य) भट्टारअ, च्छीरोदसरत्तीरगदा भट्टिणी विस्सवेदि, अज्जसालङ्काअणं इह पेक्खिदुमिच्छामि त्ति(१) ।

सुधा । रक्ष्यतां सखीप्रणयः ।

साल । एष रक्ष्यते । (इति चेट्या सह निष्क्रान्तः) ।

सुधा । किमिदानीं करोमि । न च वसुमित्रवृत्तान्तोपनतं दौर्म्मनस्यमपैति । (विचिन्त्य) भवतु । उपवनशोभानिर्व्वर्णनेनैतदपनयिष्ये । (परिक्रम्य प्रवेशं रूपयित्वाऽवलोक्य) अहो साम्प्रतमुपवनस्य रमणीयता !

विकसितकतिपयपुष्पं जलयन्त्रजलैर्निषिक्तमेतदभितः ।
मसृणज्योत्स्नाधौतं प्रविरलतारं गगनमिवाभाति ॥

(किञ्चिदूर्द्ध्वमवलोक्य) कथमवसानभूयिष्ठो दिवसः । तथाहि,

(१) भट्टारक, क्षीरोदसरस्तीरगता भट्टिनी विज्ञापयति, आर्य्यसालङ्कायनमिह द्रष्टुमिच्छामीति ।

ज्वलत्तेजोराशिः प्रलयमुपयास्यन्नचिरतः
पयोराशेः साक्षादुपरि विवशो लम्बितवपुः ।
प्रचण्डश्चण्डांशुर्विरहविधुरोऽयं मृदुरभू-
न्नलिन्या न प्रायः स्फुरति परिखिन्नो गुरुरपि ॥

अपि च ।

व्यालम्बे कमलैकबान्धववदने म्लानेऽथ रक्तत्विषि
प्रेम्णेवोन्मथिते कथं कथमपि स्वैरं शनैर्गच्छति ।
सन्ध्यामारुतलालिताऽपि मधुपैर्गुञ्जद्भिराश्वासिता
संप्रोष्यत्पतिकेव योषिदधुना म्लायत्यसौ पद्मिनी ॥

(ततः प्रविशति हृष्टः सालङ्कायनः) ।

**साल ।** (सहर्षम्) **वयस्य, दिष्ट्या वर्द्धसे । एषा खलु महानुभावा प्रियसखी सुन्दरीं मह्यमर्पितवती ।**

**सुधा ।** ( स्वगतम् ) **जानामि ।** (प्रकाशं सहर्षम्) **निर्वृतोऽस्मि ।**

**साल । यावदिममभ्युदयवृत्तान्तं अम्बायै निवेदयिष्ये ।**

(इति निष्क्रान्तः) ।

**सुधा ।** ( परिक्रम्य ) **काममुपवनशोभामवलोकयतः प्रसीदति मे चेतः । इदं हि,**

गन्धामोदितदिङ्मुखं कुसुमितैर्व्याप्तं सदा शाखिभि-
र्वल्लीभिर्नवपल्लवाभिरभितः पुष्पोद्गमाभिः श्रितम् ।
धारायन्त्रविमुक्ततोयकणिकाघर्माम्बुविन्दुस्फुर-
ल्लक्ष्मीभिः स्तवकस्तनाभिरभवत् स्थाने मनोबन्धनम् ॥

(अशोकतरुमवलोक्य) कथममुना पुष्पमात्रपतत्रिणा ससुरासुरं जगद्वशीकरोति भगवान् मकरकेतनः ? (विभाव्य) अथवा, किमत्र चित्रम् ? अविचिन्तनीय-प्रभावः खल्वसौ । तथाहि,

अशोकः शोकाग्निं ज्वलयति वियोगाकुलहृदां
शरत्वं पञ्चेषोरपि परिगतो वक्षसि कृतः ।
प्रियासंयुक्तानां श्रयति पुनराकल्परचनां
प्रतीपोऽयं लोके जयति महिमा पुष्पधनुषः ॥

(विलोक्य) कष्टमतिकरुणमग्रे वर्त्तते !

दुर्वारविरहक्लेशैः प्रत्यासन्नैर्विलोड़ितः ।
आलपत्यवशः स्नेहाच्चक्रवाकः प्रियामसौ ॥

(अन्यतोऽवलोक्य) हन्त हन्त ललितमितोवर्त्तते ।

गाढ़मेषा समालिङ्ग्य व्रततिः कुसुमस्मिता ।
द्विरेफकलझङ्कारैराभाषतइव प्रियम् ॥

(विचिन्त्य सकरुणम्) सर्व्वथा सुखपरिपन्थी कृतान्तः । कालेन खलु,

स्तवकस्तनरमणीयां प्रवालहस्तां सरागसुकुमाराम् ।
अदयोऽनिलो हरिष्यति लतामिमां विटपिनोद्दन्त ॥

(विभाव्य) अप्रतिकार्य्यः खल्वयं प्रकारः । तत्किमनेन चिन्तितेन ? (निरूप्य सविस्मयम्) कथमस्तमितएव

त्रिभुवनतलैकमणिप्रदीपे प्रचण्डातपे मार्त्तण्डे विजृम्भितमन्धकारैः । तथाहि,

तिरोहिते सहस्रांशौ तमःस्तोमो विजृम्भते ।
दुस्त्यजो मलसंघातो मायाच्छन्नइवात्मनि ॥

(विभाव्य) आश्चर्य्यमाश्चर्य्यम् !

दूरस्थितानां तरुवल्लरीणा-
मापाद्य साक्षादिव सन्निकर्षम् ।
आराममध्येऽपि वनान्तशोभा-
मारोपयत्येष किलान्धकारः ॥

अहो तीव्रकारित्वं दोषाणाम् !

ग्लपयति तिमिरालिर्यादृशं वस्तुजातम्
न खलु न खलु तादृक् रञ्जयन्त्युष्णरश्मिः ।
कइव विधिविड़म्बो मर्त्यलोकस्य योऽयं
चिरमिव गुणलेशं दोषमाश्वभ्युपैति ॥

(विभाव्य) उचितमेवैतत् संविधानकम्, यत् खलु,

तामसं कर्म्मसन्तानं तन्वन्ति किल तामसाः ।
सहसा साहसप्रायास्तमस्तेषां सहायकृत् ॥

(दिशोऽवलोक्य) अलमतः परमिह स्थित्वा । तिमिरितप्रायोऽयं प्रदेशः । तदुदवसितमेव गच्छामः ।

(इति परिक्रामति) ।

(ततः प्रविशति सम्भ्रान्तः सालङ्कायनः)।

साल। वयस्य, हृता हृता।

सुधा। का?

साल। सा।

सुधा। कथ्यतां, का सा?

साल। अलोकसामान्या।

सुधा। कस्य?

साल। भवतः।

सुधा। (सविरागम्) आः कोऽयमद्य ते दारुणः परिहासः?

साल। वयस्य, न खलु परिहासः। सत्यमेव। हृता साऽलोकसामान्या भवतः।

सुधा। (सोद्वेगम्) केन?

साल। तेन वैरिणा।

सुधा। आः, प्रभिन्नाक्षरमभिधीयताम्। केन वैरिणा?

साल। कापालिकेन।

सुधा। हा प्रिये, कौमुदि, कवलिताऽसि क्रूरेण। (इति मोहमुपगतः)।

साल। (ससम्भ्रमम्) वयस्य, समाश्वसिहि समाश्वसिहि।

सुधा। (समाश्वस्य) अलमतः परं समाश्वस्य।

साल। शान्तं पापम्। न खलु तत्रभवतीं कौमुदीमधिकृत्य ब्रवीमि। किन्तु;—

हृता साऽलोकसामान्या भवतस्तेन वैरिणा ।
कापालिकेन मद्धस्तादलान्मङ्गलमुद्रिका ॥

सुधा । (सामर्षम्) कथं पुनस्तां मुद्रामपहरन्नुपेक्षितः कापालिकापसदो वयस्येन ?

माल । (सविषादम्) वयस्य, न पारितं मया तस्योपरोद्धुम् ।

सुधा । तेन हि मिलितावावां तं दुष्टमन्विष्यावः ।

माल । यथा रोचते वयस्याय ।

सुधा । असिरसिः ।

(प्रविश्य वञ्जुलकोऽसिमर्पयित्वा निष्क्रान्तः) ।

सुधा । वयस्य, एहि, गच्छाव इदानीं कापालिकाविनयस्य प्रतिकर्त्तुम् । (इत्यसिमादाय निष्क्रान्तौ) ।

इति कौमुदीसुधाकरे चतुर्थोऽङ्कः ॥

## पञ्चमोऽङ्कः ।

( ततः प्रविशति विषण्णः सालङ्कायनः ) ।

साल । (निःश्वस्य) । अहो प्रातिकूल्यं दैवस्य !

तमिस्रपक्षं परिभूय यातः
सुधाकरश्चन्द्रिकया च योगम् ।
तस्याभिषङ्गं जनयन्नकाण्डे
तां क्वाप्यनैषीच्च घनोदुरन्तः ॥

ह्यः किल प्रदोषे ललितोद्यानसुषमाऽवलोकनकुतूहलोद्दीपितान्तरा एकाकिन्येव तत्रभवती कौमुदी तत्र गता । यावद्गृहीतार्थः परिजनस्तामनुसरन्नुद्यानपरिसरं प्राप्तस्तावदसौ कुतोऽप्यन्तर्हिता । अतः परिजनोऽप्यनभिज्ञो वृत्तान्तस्य । प्रियायामनार्यकारी दुष्टः कापालिकोऽपि मयैव व्यापादितः । तत् किमत्र निमित्तमिति न खल्वधिगच्छामि । वयस्यस्त्वनेन प्रत्यग्रशोकावेगेनोन्मादितइव इतः कौमुदी ततः कौमुदी कुतः कौमुदी,—इति जल्पन् अश्रुप्लावितवदनकमलः कथं कथमपि धारयति जीवितम् । यथा च तस्य मनसोविकारस्तथा प्रेक्षे, नून-

मप्रतिकार्य्योभविष्यति। सर्व्वथा भगवत्योर्देवताः स्वस्ति करिष्यन्ति। (विचिन्त्य)। कुतः पुनरत्रभवत्याः प्रवृत्तिमुपलप्स्ये।

(परिक्राम्य निःश्वस्य)।

अयमपरः श्लीपदस्योपरि विस्फोटकोद्भेदः, यत्तत्रभवत्या विप्रयोगेणातिमात्रमाकुलिता प्रियतमा मे सुन्दरी।

तथाहि,

व्याहृताऽपि मधुरं न भाषते
सान्त्विता न च धृतिं प्रपद्यते।
गाढमश्रुसलिलैः परिप्लुता
सा दुनोति हृदयं दिवानिशम्॥

अपि च।

प्रत्यग्रशोकाश्रुभिरुद्भवद्भिः
परिस्फुरत्स्मेरमुखं प्रियायाः।
हिमप्रपातैः प्रथमैरिवाभूत्
म्लानं समुत्फुल्लमिवारविन्दम्॥

(विभाव्य निःश्वस्य च)।

किमहमिदानीं करोमि मन्दभाग्यः?

किं सान्त्वयामि दयितामथवा वयस्य-
मन्वेषयाम्युत सखीं सुलभव्यलीकाम्।

इत्याकुलं न खलु शान्तिमुपैति सत्यं
लीनं नु कृच्छ्रनिवहैर्मथितं नु चेतः ॥

भवतु, प्रियतमामाश्वास्य प्रियवयस्यं सम्भावयामि।

( निष्क्रान्तः । विष्कम्भकः । )

( नेपथ्ये सुधाकरस्य प्रावेशिकी ध्रुवा । )

दइश्राविरहाउलिश्रो पच्चग्गोवणश्रसोश्रविश्रलमणो ।
पिश्रश्रम श्रखेसन्तो मिलाणकन्ती परिब्भमइ[१] ॥

(ततः प्रविशत्युन्मादावस्थः सुधाकरः) ।

सुधा । प्राप्तयं श्मशानभूमिः । ( विलोक्य ) अहो रौद्रता श्मशानवाटस्य । अयं हि,

व्याकीर्णैः केशपाशैरधिकतरमिलद्भ्रूक्षतैर्दुनिरीक्ष्यैः
कङ्कालैः शङ्खशुभ्रैरविकलसकलैर्भूयसाऽप्यभ्युपेतः ।
काष्ठैरर्द्धावदग्धैर्मृतचरणशिरःपाणिमध्यैः शरीरै-
रङ्गारैश्चापि भीमः कुणपशयनकैः सम्परीतश्चिताभिः ॥

अपिचाच,

ज्वालामालावलीढ़त्रिदशपुरवधूवस्त्रखण्डः प्रचण्डो-
मेदोमज्जास्थिधातुप्रचुरपरिचयस्तुङ्गमापिङ्गलाभः ।

(१) दयिताविरहाकुलितः प्रत्यग्रोपनतशोकविकलमनाः ।
प्रियतमामन्वेषयन् म्लानकान्तिः परिभ्रमति ॥

घोराशावश्विताभ्योज्ज्वलति परिमिलत्सप्तजिह्वाकरालो-
वह्निर्गर्व्वं शरीरेष्वखिलमसुभृतां दर्शयिष्यन्नसारम् ॥

स्थाने खलु श्मशानं वैराग्यस्थानमुपदिशन्ति । लोकानां खलु,

अर्द्धावदग्धविकटास्थशरीरघोरा-
भूयः चरद्द्रुलतैलवशाऽक्तमांसाः ।
विस्तारितोरुदशना मदगर्व्वमुच्चै-
रेते चितानलगताः कुणपा हसन्ति ॥

(चर्चरिकया विचिन्त्य) यदा कुणपा अपि हसन्ति, तदा वयमपि किं न हसामः ? (उपविश्य) भवतु हसामः ।

(अनन्तरे चर्चरी) ।

चिउरप्पअरे पिअकाणणए
परिदारुमए कुणबाट्ठिमए ।
समिदड्ढअलेअरओ मअओ
पुरिसे हसइ क्खु विआरमओ[१] ॥

(विहस्य । पुनश्चर्चरिकया विचिन्त्य) अथवा न हसामि ।

(विहस्य । पुनः "चिउरप्पअरे"—इत्यादि पठित्वा) ।

यावत्प्रणष्टां प्रियामस्मिन् श्मशानकान्तारे अन्वेषयामि । (इत्युत्थाय परिक्रामति) ।

(१) चिकुरप्रकरे पिटकाननके परिदारुमये कुणपास्थिमये ।
सामिदग्धकलेवरकोमृतकः पुरुषान् हसति खलु विकारमयः ॥

( नेपथ्ये साट्टहासस्तालवध्वनिः ) ।

( वामकेनावलोक्य ) अहो प्रमोदनिर्भरः पिशाचाङ्गनानाम् !

अन्त्रैः कल्पितभूरिवेशरचनाः कङ्कालमालाधरा-
मेदोभिर्नितरां विलिप्तकरणा धाराङ्किताः शोणितैः ।
दीर्घाङ्गोविकृताननाट्टहसिता रूक्षालका दन्तुराः
संशुष्काः पिशिताशनप्रमुदिता नृत्यन्ति भूताङ्गनाः ॥

( द्विपदिकया विलोक्य ) ।

हन्त हन्त! अदर्शनीयं खल्वग्रे वर्त्तते। एते खलु पिशाचाः,

प्रेतादुत्कृत्य कृत्तिं प्रकटितदशनैः खण्डखण्डानि मांसा-
न्यादायादाय जग्ध्वा स्तुतरमकृमियुक्पूतिगन्धीनि भूयः ।
मस्तिष्कं द्राक् करोटीचषकपरिगतं काममापीय पश्चा-
दाचुष्याचुष्य मज्जप्रचुरमिति मुहुश्चर्व्वयन्त्यस्थिषण्डम् ॥

(चर्चरिकया प्रतिनिवृत्य) ।

किमित्यस्याममेध्यभूमौ प्रियतमाऽन्विष्यते। (विचिन्त्य सासम् )। आं स्मृतम्। पापः खण्डमुण्डस्तामपहृत्य कदाचिदिहानयेत् ? स्थाने खलु श्मशानं साधनस्थानं पापानाम्।

(द्विपदिकया दिशोऽवलोक्य) ।

कथं न कुत्रापि प्रियतमा! तत्कुतः खल्वस्याः प्रवृत्ति-मुपलप्स्ये? (विभाव्य) पुनरपि कदाचित् पापया वृद्ध-तापस्या तुङ्गपर्व्वतं नीता भवेत्? (सकरुणं विचिन्त्य) भवतु, तत्रैव गच्छामि। (इति परिक्रामति)।

(खण्डधारा)।

विरहालिड्ढअमाणसओ
पिअअमपेक्खणलालसओ ।
बाहोदुम्मिअदिट्ठिअआ
गाहइ गहणं गइंदओ[1] ।

(चर्चरिकया अवलोक्य)।

अयं तुङ्गपर्व्वतः। यावदधिरोहामि। (इति नाट्येनाधि-रोहति)।

(द्विपदिकया दिशोऽवलोक्य)।

दइआविरहाउलओ दुक्खालिड्ढअहिअअओ ।
सरवरजले किलंतओ तम्मइ चक्कजुआणओ[2] ॥

(सविषादम्) कथं न दृश्यते! (सकरुणम्)।

(१) विरहालीढमानसकः प्रियतमाप्रेक्षणलालसकः
वाष्पद्रूनदृष्टिकः गाहते गहनं गजेन्द्रकः ॥

(२) दयिताविरहाकुलकः दुःखालीढहृदयकः ।
सरोवरजले क्लान्तकः ताम्यति चक्रयुवकः ॥

प्रत्यूहं परिभूय नाम कथमप्यासादिता प्रेयसी

सोढ़ोनास्मि कृतान्तदुर्व्विलसितैस्तस्मात् सुखं निर्व्विशन् ।

(सास्रम्) ।

अन्योन्यं प्रणयस्तु नौ प्रतिपदं भूयोऽतिभूमिङ्गतः

क्वासौ मे दयिता क्व चाहमकृती हा हन्त कोऽयं विधिः ! ॥

(इति मूर्च्छितः पतति) ।

(पुनर्द्विपदिकयोत्थाय सविषादम्) ।

**को नु खल्वयं प्रकारः ?** (निःश्वस्य) ।

लब्धुं निर्वृतिमन्तरायरहितां प्रेम प्रियायां कृतं

हा कष्टं विरहो दहत्यतितरां विस्मर्य्यते तत् कथम् ?

आदातुं मणिमग्र्यसम्पदमहो मन्दोविलान्तं गतो-

दष्टस्तत्र भुजङ्गमेन विषमज्वालाकुलस्ताम्यति ॥

(विभाव्य) । **सोऽयमस्मदीयानां भाग्यविपर्य्ययानां दारुणः परिणामः ।**

(अनन्तरे चर्चरी) ।

विरहुम्माउम्महिअहिअओ

गरुअरपेम्मुग्गमिअसुदुक्खो ।

कसणइ विअ परिझीणमिअङ्को

दीसइ विअ दवदद्धणअरुक्खो[१] ॥

---

(१) विरहोन्मादोन्मथितहृदयः गुरुतरप्रेमोद्गमितसुदुःखः ।

कृष्ण इव परिक्षीणमृगाङ्कः दृश्यते इव दवदग्धनवरुक्षः ॥

(विचिन्त्य) । सर्व्वथा भवितव्यताऽत्र बलवती । (विभाव्य) तत्किमेनामुपालप्स्ये ? (पुनश्चर्च्चरी) भवतु । उपालभे ।

(चर्च्चरिकयोपविश्य । जानुभ्यां स्थित्वा) ।

भगवति, भवितव्यते, मन्दभाग्ये मयि किमिदमकरुणत्वं भवत्याः ?

(वामकेन चलित्वा । आकाशे) ।

किमाह भवती,—किं नैर्घृण्यमनुष्ठितम् ? —इति ।

(सकरुणम्) भगवति, यदि मे सौभाग्यं न सहसे, मा सहस्व । किमेवं मामतिमात्रं दुःखाकरोषि ?

(विचिन्त्य) अहो नैष्ठुर्य्यं भवितव्यतायाः !

कथम् ?—इति ।

कादम्बिनी यदिह कातरचातकाय
दत्ते न वारि सरसाऽपि न तत्र चित्रम् ।
दुःखं तदेतदमुमेकरसं मुहुर्यत्
सन्तर्ज्जयत्यलघुगर्ज्जिततीव्रशब्दैः ॥

(द्विपदिकयोत्थाय) ।

अलमस्याः परव्यसनरुचेरुपालम्भेन ?

व्यसनमथ परेषां निर्व्वृथं यो विधत्ते
न खलु न खलु तस्मात् खेदमाप्नोति किञ्चित् ।
स कुटिलमतिरेतत्कातरोत्थाऽश्रुपाते—
र्व्रजति न करुणत्वं किन्तु भूयः प्रमोदम् ॥

तत्किमनया परव्यसनसन्तुष्टया? यावत् प्रणष्टां प्रियतमामेवान्विष्यामि। (इति परिक्रामति)।

(अनन्तरे चर्चरी)।

कोवं मज्जि मा करिहि दुरंते
णट्ठा मज्झ मिअलोअणि कन्ते।
परपुट्ठा जह सुललिअसद्दा
विज्जुवण्णा विअ सुहलद्दा[१] ॥

(बाधां रूपयित्वा)।

को नु खल्वयं सूचीव्यधैर्मां व्यथयति? (चर्चरिकया विचिन्त्य)। आं ज्ञातम्। वसन्तसखो मलयानिलः परागवर्षैर्बाधते।

(अञ्जलिं बध्वा)।

भगवन्, दक्षिणपवन, साधु खल्विदं बन्धुकृत्यमनुष्ठितम्। एतत्तु विज्ञापयामि,

जगत्प्राणो मम प्राणान् कथं व्यथयसि प्रभो।
मन्दभाग्ये मयि तथा भूयः कथमदक्षिणः ॥

अथवा। भाग्यविपर्य्ययस्यायं प्रकारः, यत् शीतलोऽप्युपचारः सन्तापयति।

(१) कोपं मयि मा कुरु दुरन्त नष्टा मम मृगलोचनी कान्ता।
परपुष्टा यथा सुललितशब्दा विद्युद्वर्णा इव सुखलब्धा ॥

मम हि,

अन्तः सन्तप्यमानस्य स्निग्धवाह्यक्रिया वृथा।
कोटरज्वलनप्लुष्टतरोर्वृष्टिरिवोपरि ॥

भवतु ! अभ्यर्थयाम्येनम् ।

हंहो मलयानिल,

त्वं सर्व्वगो भवसि नार्हसि तद्विहन्तुं
याच्ञामिमां विधिवशान्मम दूरबन्धोः ।

(आत्मानं निर्दिशन्) ।

निःश्वाससौरभविशेषितगात्रगन्धं
तस्या वहन् क्षणमिमां तनुमाश्लजस्व ॥

कथं वाधतएव! किमहमेकाकी करोमि ? (विभाव्य) क्व नु पुनः सखा मे सालङ्कायनः ? न खलु दयितासमागमहर्षितोन स्मरति मे मन्दभाग्यस्य ? उपालभे तावदेनम् ।

(अनन्तरे चर्चरी) ।

विरहाउलओ परिवाउलओ
सहअररहिओ मिअराअअओ ।
गहणे विविणे वेअ भमन्तो
तम्मइ णिअपिअअम सुमरन्तो(१) ॥

(१) विरहाकुलकः परिव्याकुलकः सहचररहितो मृगराजगतः ।
गहने विपिने एव भ्रमन् ताम्यति निजप्रियतमां स्मरन् ॥

(आकाशे)।

सखे,

स्मरसि किं ? दयिताधरमाधुरी-
मधुकर, प्रणयस्थमिमं जनम्।
परिचयो न सतां प्रतिहन्यते
न च मनो हितयग्रहणक्षमम्॥

भो वअस्स, आअरणे मइ लच्छीअदि[१]। (इति नर्त्तित्वा)। चर्च्चरिकया पुनः "स्मरसि किं"—इति पठित्वा। (विहस्य। पुनश्चर्चरी)। पुनस्तदेव पठित्वा। (विभाव्य सकरुणं निःश्वस्य) अथवा। नाहमिदानीं वयस्ययोग्यो भवतः। कुतः ?

दयितासहितोऽद्य भवानमृतार्णवगाहमानइव दृप्तः।
प्रतिकूलविधेरधुना प्रियया नितरां वियुक्तोऽस्मि॥

(इति मूर्च्छितः पतति)।

(द्विपदिकयोत्थाय सोद्वेगम्)।

हन्त हन्त! दुष्टमाचा पुनरप्यपक्रान्ता मे प्रियतमा। (विभाव्य)। नूनमिहैव वर्त्तते। अन्विष्यामि तावत्।

(पदद्वयं पुरत उपसृत्य)।

(सवितर्कम्)। किमित्येवङ्कृतमपि मामपहाय गता ? न

(१) भो वयस्य, आचरणेन मया लक्ष्यते

खलु क्रीड़ितमेतत्? भवतु। उपालभे तावदेनाम्।

(अनन्तरे चर्चरी)।

कइ मज्झि पिअअम दिट्ठा णट्ठा।
मिअपइलोअणि विअ परपुट्ठा[१] ॥

(आकाशे)।

नयनान्तरिताऽपि सुन्दरि,
भवसि त्वं यदि निष्ठुरा सती।
मनसस्तु परोक्षवृत्तितां
मम गन्तुं दयिते, न पार्य्यसे ॥

(तेन नर्त्तित्वा। पुनश्चर्चरी। विहस्य)। पुनर्नयनान्तरितेति पठित्वा। (विभाव्य सकरुणम्)। कथं प्रलयोपनतः स्वप्नोऽयं न पुनः परमार्थतः प्रियासमागमः! (इति मूर्च्छति)।

(उत्थायोपविश्य)।

(सविषादम्)। किमद्य करणीयमिति न खल्वधिगच्छामि। अहह, कथं प्रबोधोऽपि दुःखहेतुरस्तमितभागधेयानाम्! (विचिन्त्य)। अथवा। प्रतीपो विधिः सर्व्वं प्रतीपयति।

(१) कुत्र मम प्रियतमा दृष्टा नष्टा
मृगपतिलोचनी इव परपुष्टा ॥

मम हि,

प्रलयोऽपि स्पृहनीयो यदि तत्र मृगेक्षणा विलोक्येत ।
न पुनर्वियोगपरुषः प्राणेश्वर्य्याः प्रबोधोऽपि ॥

अपिच ।

अपनेयोऽपि प्रलयः श्लाघ्यो दयितासमागमोपायः ।
इति मे दग्धकृतान्तस्तमपि न सहते बताल्पभाग्यस्य ॥

(इति सकरुणं विभाव्य) ।

(खुरकः) ।

पिअअमविओअविसूरणओ
दइआविरहदुक्खाइअहिअओ ।
अहिअवाऊग्गममिलाणमुहओ
मन्थरगइओ भमइ कुरङ्गओ(१) ॥

(खुरकानन्तरे चर्चरी) ।

महुअरपरहुअमहुरसएहिं
सुन्दरसिणिद्धअवररूवेहिं ।
दक्खिणपवणुव्वेल्लिअकिसलअणिअरू
कइ मज्झ णट्ठा पिअ लदा विअ मणोहरू(२) ॥

(१) प्रियतमावियोगविसूरणकः दयिताविरहदुःखार्दितहृदयः ।
अधिकवाष्पोद्गमम्लानमुखकः मन्थरगतिकोभ्रमति कुरङ्गकः ॥

(२) मधुकरपरभृतमधुरस्वतैः सुन्दरस्निग्धकवररूपैः ।
दक्षिणपवनोद्वेल्लितकिसलयनिकरे कुत्र मम नष्टा प्रिया लतेव मनोहरा ॥

(विभाव्य। सास्रम्)। अहह!

दृष्टे यस्मिन् भवति करणं लुप्तवेद्यान्तरं द्राक्
लोलं चक्षुर्यमपि सततं वीक्षितुं व्यग्रमास्ते।
चेतो यस्य स्मृतिमपि रसान्मन्यतेऽत्युत्सवं मे
सोऽयं जातो बत नयनयोः प्रार्थनीयो जनोऽस्तम्॥

(इति पुनर्मूर्च्छति)।

(क्षणान्तरे संज्ञां लब्ध्वा)।

(निःश्वस्य)। अहो मदीयानां दुरितानां दारुणः परिणामः, यस्य प्रभावात् आप्यायनमपि व्यथयति!

(पाठस्थान्तरे भिन्नकः)।

पिअवज्जिअओ विरहाउलओ
परिदुक्खिअओ मिअराअमओ।
उअ दूमिअओ पिअपेम्मरओ
अहिअं भमइ परिमुद्धमई(१)॥

(द्विपदिकया परिक्रम्य)।

कथमिति?

प्रीतिर्यत्र प्रतिपदमहो निर्विशेषाऽप्यकाण्डे
भावाविद्धा भ्रुकुटिरचना यत्र कोपं व्यनक्ति।

(१) प्रियावर्जितकः विरहाकुलकः परिदुःखितकः मृगराजमतः।
पश्य दूनकः प्रियाप्रेमरतः अधिकं भ्रमति परिमुग्धमतिः॥

लोकातीतामृतमपि सदा यत्र विम्बाधरान्तः
प्रेमस्तस्मादहह मधुराद्दूयते मेऽन्तरात्मा ! ॥

(सविषादम्) । **अहह ! कथमिति ?**

अल्पं यत्र व्रजति गुरुतां वस्तु लब्धप्रसादा
दृष्टिर्यत्रामृतरसपरिस्यन्दिनी यत्र गर्हा ।
अभून्मेषो ललितमधुरे प्रेम्णि तस्मिन्निमग्नो-
मुग्धो दग्धैर्व्विधिविलसितैर्दूयते मेऽन्तरात्मा ॥

**भवतु । अन्यस्मिन्नवकाशे प्रियामन्वेषयामि ।**

(चर्च्चरिकयोत्थाय परिक्रम्य) ।

(निःश्वस्य) । **अहो प्रकारो भाग्यविपर्य्ययस्य।**

तड़िदिव वपुरुच्चैः कम्पयत्येव भूयः
स्पृशति हृदयमेतन्मर्म्मजालानि चैव ।
विरह इह नितान्तं संप्रमाथी प्रियायाः
न खलु विधिवशान्मे चेतना तु व्यपैति ॥

(चर्च्चरी) ।

विरहविआरसुमहिअहिअअओ
बहुविअवेअणविअलिअधीरओ ।
तम्मइ कुसुमप्पअरमणोहरू
दुम्मिअहिअओ अहिअं वनअरू[१] ॥

(१) विरहविकारसुमथितहृदयकः
बहुविधवेदनाविगलितधैर्य्यकः ।
ताम्यति कुसुमप्रकरमनोहरे
दूनहृदयः अधिकं वनवरे ॥

(चर्चरिकया विचिन्त्य)।

अहह!

मुक्तः क्लेशज्वालावलयविषमेऽस्मिन् कतिपये
प्रियाप्रेम्णा प्रायो जगति सुखिनो धन्यजनुषः।
वयन्त्वेतेनैवोन्मथितमनसः क्लेशबहुलाः
ममैवोच्चैर्जन्मान्तरदुरितविस्फूर्ज्जथुरयम्॥

(इति सकरुणं विचिन्त्य। द्विपदिकया परिक्रम्योपविश्य)।
(सविषादम्)।

अकरुणविधिनाऽभूत् प्रेयसीविप्रयोगो-
हतहृदयमिदानीं तद्व्यलीकक्रमेण।
स्फुटति किमपि नैतच्चेतना किं न याता
किमपरमिदमुच्चैर्वज्रसारं मनो मे॥

अहो असम्यक् कारित्वं दैवस्य! (पुनः सकरुणं अकरुण-विधिनेति पठित्वा, पुनः साधिक्षेपं तदेव पठित्वा, निःश्वस्य)।

अकरुणविधिजन्मा विप्रयोगः प्रियायाः
दहति हृदयमध्वा कूकुलोत्थाग्निकल्पः।
भवति यदि तदेतद्भस्मसाचावशेषं
तदुचिततममुच्चैः स्यात् कृतान्तस्य कृत्यम्॥

(इति विभाव्य द्विपदिकयोत्थाय)।

(खण्डधारा)।

पिअअमविओअजणिएहिं पचग्गसुसंदावेहिं।

अव्वो दुम्मिअमाणसओ वज्जइ गहणे दुक्खिअओ[१] ॥

(पदद्वयं पुरत उपसृत्य पुनरुपविश्य) ।

(निःश्वस्य) । हा प्रियतमे, क्व गतासि ? (सकरुणम्) ।

आसादिता सुरवधूरिव पुण्यपुञ्जैः
सम्पाद्य कानिचिदहानि महोपभोगम् ।
भूपालमभ्रिरमनेव भृशप्रमत्तं
मां मन्दभाग्यमपहाय गता प्रिया मे ॥

(इति मूर्च्छितः पतति) ।

(उत्थायोपविश्य) ।

अथवा । विरहोऽपि मत्प्रियासम्बद्धः, इति नात्र मे द्वेषः ।

(उत्थाय परिक्रामति) ।

(अनन्तरे चर्चरी) ।

बहुविअविआरविमद्दिअहिअअओ
गरुअरवेअणाक्खलिअधीरओ ।
कुसुमप्पअरुम्मादिअहिअओ
तम्मइ काणणए जुआणओ[२] ॥

(१) प्रियतमावियोगजनितैः प्रत्यग्रसुसन्तापैः ।
अहो दूनमानसकः व्रजति गहने दुःखितकः

(२) बहुविधविकारविमर्दितहृदयकः
गुरुतरवेदनास्खलितधैर्यकः ।
कुसुमप्रकरोन्मादितहृदयः
ताम्यति कानने युवकः ॥

पुनः, विरहोऽपि,—इति पठित्वा। (विभाव्य) तथाप्यनुपक्रम्योऽयमातङ्कः।

किमिति ?

तद्विप्रयोगजनितैः कुसुमेषुतापै-
र्दाहोऽपि तत्कृतइति स्पृहनीयएव।
दुःखन्त्विदं मनसि मे विरहाग्नितप्ते
सा सर्व्वदा स्थितवती परितप्यते यत्॥

(विचिन्त्य) वृथा खलु मया मनसः सन्तापवृद्धिः क्रियते। यदा प्रियतमा मे मनस्येव निरन्तरं वर्त्तते, तदा किमित्यात्मनः खेदमुत्पादयामि।

(चर्च्चरी)।

महुअरमहुरविरुअमणोहरू
धाराहरु विअ सुचिहुरणिअरू।
विज्जुलिपीअलवसमणोहरू,
णट्ठा पिअ विअ मुद्धकणेरू(१)॥

(विहस्य, यदा प्रियतमा, इत्यादि पुनः पठित्वा)।

कथमिति ?

(१) मधुकरमधुरविरुतमनोहरा
धाराधरवत्सुचिकुरनिकरा।
विद्युत्पीतवर्णमनोहरा
नष्टा प्रिया इव मुग्धकरेणुः॥*

प्रकल्प्य लोकं मनसाऽपि तावत्
तस्याः स्वमात्मानमवैमि धन्यम्।
चिन्ताऽप्यशक्तौ विहिता फलाय
प्राप्तोऽनुकल्पो मधुनो गुड़ोऽयम्॥

(तेन चर्च्चरिकया नर्त्तित्वा। पुनः प्रकल्प्य,—इत्यादि पठित्वा। पुनश्च-र्च्चरी। पुनर्नर्त्तित्वा। विहस्य। पुनस्तदेव पठित्वा)।

(गलितकः।)

(विचिन्त्य। सविषादम्) **अथवा। असदृशं पुनरेतदुपन्यस्तं, न खल्वेतदेवंविधम्। कुतः?**

साक्षात् यद्यपि दुर्लभः प्रियतमालोकोऽव्यलीकाद्विधे-
रन्तः किन्तु तथापि हन्त दयिता निर्व्वर्ण्यते सर्व्वदा।
तच्चिन्तोपनतोऽपि यो मम भवत्यानन्दसान्द्रोलय-
स्तस्मिन् केवलमात्मसाक्षिणि सुखे व्यर्थाः कवीनां गिरः॥

**अहो असदृशव्यवहारो मनसः! यदिदमेवं गतमपि प्रियासमागमं नाभिनन्दति।** (विभाव्य) **अथवा। नायं मनसो दोषः। यतः,**

हृदि स्थिता यद्यपि पद्मवक्त्रा
न पश्यतस्तां मम यस्तथापि।
क्लेशो भवत्यल्पगिरां कवीनां
स्थाने निवृत्ताः खलु तत्र वाचः॥

**तत्कुतः पुनर्दयितां प्रेक्षिष्ये? न खलु प्रवृत्त्युपलम्भो-**

ऽपि सुलभ । (विचिन्त्य निःश्वस्य) वृथा खल्वस्मदीयो-
ऽन्तरात्मा क्लिश्यते ।

गतैव सा पद्मपलाशनेत्रा
न नाम तस्याः पुनरागमोऽस्ति ।
वृथैव सङ्कल्पशतं मनो मे
तनोत्यभित्ताविव चित्रकर्म्म ॥

(इति मूर्च्छति) ।

(उत्थाय परिक्रम्यावलोक्य च) ।

कथमयमशोकतरुः! (उद्वेगं रूपयित्वा) कथमशोकोऽपि
शोकहेतुरस्मद्विधानाम्! भवतु । विज्ञापयाम्येनम् ।

(अञ्जलिं बद्धा) ।

भगवन्,

त्वं कामिलोकहृदयेशयशल्यकल्पं
निःशोक, पुष्पधनुषः कुसुमास्त्रजालम् ।
किं भोस्तनोषि बहुशो नितरामजोघं
शोचन्ति यैर्विरहिणः प्रहृतास्त्विरस्य ॥

शृणुमस्तावत्किमयं वक्ति । (इति दत्तकर्णस्तूष्णीं तिष्ठति) ।

(द्विपदिकया विलोक्य) ।

(सहर्षम्) हन्त हन्त व्यवसितं मे सफलं सम्वृत्तम् ।
यथाऽयं पल्लवहस्तैर्मामाह्वयति, तथा तर्कयामि
विदितोऽस्य प्रियोदन्तो भविष्यति । यावत्सम्भाव-
याम्येनम् । (इति परिक्रामति) ।

(अनन्तरे चर्चरी)।

किसलअहत्थप्पअलणसण्णेहिं
मउरविहङ्गमउलविरइअगीएहिं।
गन्धामोदूअवाउविणिव्वुददेहओ
णच्चइ मऊस्सवइ इह कप्पअरुवरओ[१]॥

(चर्चरिकयोपसृत्य। अञ्जलिं बद्धा)।

भगवन्, अशोकतरो, कथय कथय,

कुसुमव्यतिरिक्तमायुधं
कुसुमेषोः प्रहरिष्यतोऽधुना।
दयिता मम वामलोचना
यदि दृष्टा भवताऽत्र कौमुदी॥

(द्विपदिकया निरूप्य) कथमयं व्याधूयोत्तमाङ्गं न दृष्टा इत्याह!

(चर्चरी)।

तुममाअक्खहि मइ कप्पअरु,
सा पइ दिट्ठा सुकसणचिउरु।
वित्थारिअगहणजुअमउरु
अच्छर जिअ परिपुरिसमणोहरु[२]॥

(१) किसलयहस्तप्रचलनसंज्ञाभिः।
मधुरविहङ्गमकुलविरतगीतैः।
गन्धामोदितवायुविनिर्वृतदेहकः
नृत्यति मधूत्सवे इह कल्पतरुवरकः॥

(२) त्वमाचक्ष्व मां कल्पतरो, सा त्वया दृष्टा सुकृष्णचिकुरा।
विस्तारितगुरुस्तनयुगमधुरा अप्सरस इव परिपुरुषमनोहरा॥

(उपविश्य चर्चरिकया विचिन्त्य, सरोषम्) ।

**अरे रे रुक्खअ, किं गोवाअसि[१] ?**

(इति नर्त्तित्वा उत्थाय) ।

**यदि तावत्,**

चरणप्रहारमस्या नूपुरशिञ्जितमनोहरं नापः ।
स्कन्धात्प्रभृति कथन्ते रुचिराणि लसन्ति पुष्पाणि ॥

**फलअणुसारे मइ जाणिज्जइ[२] ।**

(चर्चरिकया पुनः चरणप्रहारम्—इति पठित्वा) ।

कथयाशोक, कान्ता मे कुत्रास्ति ? कुसुमोद्गमः ।
तदङ्घ्रिताड़नाज्जातः, वृथा निक्कोतुमिच्छसि ॥

(पुनश्चर्चरी) ।

सा मज्झ पिअअम तरुवरअ पइ ।
कुङ्कुमवण्णा दिट्ठा भणइ[३] ॥

(चर्चरिकयोपविश्य । कथयाशोकेति पुनः पठित्वा । पुनश्चर्चरी । पुनः सानुनयं, कथयाशोकेति पठित्वा, पुनः साधिक्षेपं, तदेव पठित्वा निरूप्य) ।

**कथम्,**

भूतार्थमप्यपलपन् तरुरेष सुदुःसहैः ।
हुङ्कारैस्तर्ज्जयित्वा मां पुष्पास्त्रैरभिवर्षति ! ॥

(१) अरे रे वृक्षक, किं गोपायसे ?
(२) फलानुसारेण मया ज्ञायते ।
(३) सा मम प्रियतमा तरुवरक, त्वया
कुङ्कुमवर्णा दृष्टा भण ॥

सर्व्वथा मदीयस्य प्रतिकूलदैवस्यायं प्रकारः। याव-
दन्यमवकाशं गमिष्यामि। (इत्युत्थाय परिक्रामति)।

(द्विपदिकयाऽवलोक्य)।

अये, अयमसौ मालतीपुष्पप्रणयी मधुकरस्तिष्ठति।
प्रक्ष्यामि तावदेनम्।

(कुटिलिका)।

णिअपिअअमविरहाउलओ।

(मन्दघटी)।

महुअरकोइलणिणाअवाउलओ(१)।

(अनन्तरे चर्चरी)।

महुअर, महुरकहापरपुट्ठा
आअक्खहि मइ कइ पइ दिट्ठा।
विज्जुलिकन्तीपरिचोरिअआ
पिअअम वम्महविअअपडाआ(२)॥

(वलन्तिकयोपसृत्य अञ्जलिं बद्धा)।

भगवन्, अपि नाम दृष्टा भवता प्रियतमा मे कौमु-
दी? शृणु तस्या उपलक्षणम्।

---

(१) निजप्रियतमाविरहाकुलकः।
मधुकरकोकिलनिनादव्याकुलकः॥

(२) मधुकर, मधुरकथापरपुष्टा
आचक्ष्व मां कुत्र त्वया दृष्टा।
विद्युत्कान्तिपरिचोरितका
प्रियतमा मन्मथविजयपताका॥

मधुकर, मधुरस्वना वरोरूः
शशधरपङ्कजनिन्दिताननश्रीः।
कुटिलचिकुरजालभूषिताङ्गी
जघनभरालसगामिनी प्रिया मे॥

(तिर्य्यगवलोक्य झङ्कारमनुभूय च)।

किमाह भवान्, कथमेवं प्रणयिनमपि त्वामुपेक्ष्य गता,—इति। (सकरुणम्) भगवन्, अस्ति ममाप्यत्र वितर्कः। न खलु निश्चयमधिगच्छामि।

दयिता मयि बद्धमानसा
स्वयमेषा न गतेति तर्कये।
न च हेतुरिहेक्ष्यते परो
न च कोपो मयि कोऽपि सुभ्रुवः॥

(विलोक्य) कथमयमदत्त्वैव प्रतिवचनं मधुपाने प्रवृत्तः। सुष्ठु खल्विदमुच्यते,

स्वार्थपरो लोकोऽयं निजसुखमेव बहु मन्यते प्रायः।
परदुःखद्रुतमनसो नितरां विरला महात्मानः॥

भवतु। अन्यतोगच्छामि।

(परिक्रम्यावलोक्य)।

अयं शिलोच्चयप्राग्भारः। यावदेनं प्रियाप्रवृत्त्यर्थमभ्यर्थये। न पुनरयमुच्चैःशिरा मामवधीरयिष्यति।

(जम्भलिका)।

दइआविरहाउलिअओ दुक्खालिद्धअहिअअओ ।
वाहोमिलाणवअणओ तम्मइ वणे जुआणओ[१] ॥

अत्युन्नतत्वात् नूनमस्य दृग्गोचरं गता मे प्रियतमा ।

(अस्यानन्तरे अर्द्धद्विचतुरस्रकः) ।

गरुअरदइआविरहुम्माअविसेसो ।
एक्को काणणए परितम्मइ पेम्मवसो[२] ॥

(चतुरस्रकेणोपविश्य अञ्जलिं बद्धा) ।

याता दृग्गोचरं धीर, तव कान्ता वने मम ।
उद्वहन्ती मुखं म्लानं हिमक्लिष्टहिमांशुवत् ॥

(नेपथ्ये तथैव प्रतिशब्दः) ।

(श्रुत्वा सहर्षम्) कथं दृग्गोचरं यातेत्याह !

(अनन्तरे चर्चरी) ।

गिरिकाणणए कुसुमप्पअरे
पवणांदोलिअकिसलअणिअरे ।
आअक्खहि मइ पइ मज्झ कन्ती
दिट्ठी महिअर, कम्मि भमन्ती[३] ॥

---

(१) दयिताविरहाकुलितकः दुःखालीढकहृदयकः ।
वाष्पम्लानवदनकः ताम्यति वने युवकः ॥
(२) गुरुतरदयिताविरहोन्मादविशेषः ।
एकः कानने परिताम्यति प्रेमवशः ॥
(३) गिरिकाननके कुसुमप्रकरे
पवनान्दोलितकिसलयनिकरे ।
आचक्ष्व मां त्वया मम कान्ता
दृष्टा महीधर, कुत्र भमन्ती ॥

(सविमर्षम्) ।

अपि निबद्धरतिं विधिपर्य्यया-
दकृतिनं न चिरेण विहाय माम् ।
कथय कुत्र मृगेक्षणलक्षणा
प्रियतमा वसतीह महीधर ॥

(नेपथ्ये तथैव प्रतिशब्दः) ।

(आकर्ण्य । विभाव्य । सास्रम्) ।

कथं ममैव प्रतिशब्देन प्रतारितोऽस्मि, न पुनरभ्युपपन्नः प्रत्युत्तरयता महीधरेण !

(इति मूर्च्छितः पतति । उत्थाय) ।

अहह, न कोऽप्यभिज्ञः प्रियावृत्तान्तस्य ! भवतु । अन्यतः पश्यामि ।

(परिक्रम्य द्विपदिकया दिशोऽवलोक्य) ।

अये, इयं परभृता चूतशाखामध्यास्ते । प्रक्ष्याम्येनाम् । सम्भावयामि, स्त्रीत्वादभिज्ञैषा प्रियोदन्तस्य भविष्यति ।

(खण्डिका) ।

कसणसिरी रअभूसिअओ पिअविरहविआरलु ।
रणे धावइ वाउलओ दुहिओ पेक्खह कोलु(१) ॥

(चर्चरिकयोपसृत्य) ।

---

(१) कृष्णश्रीः रजोभूषितकः प्रियाविरहविकारवान् ।
अरण्ये धावति व्याकुलकः दुःखितः पश्यत कोलः ॥

मञ्जुस्वना त्वमिव मे दयिता प्रणष्टा
राकासुधांशुवदना बत वेदिमध्या।
अन्वेषयामि विवशो मृगलोचनीं तां
कुत्र स्थिता परभृते, वद सा वरोरुः॥

(आकर्ण्य) अये, इयं कुहूः कुहूरित्याह,। तर्कयामि, दयापरवशैषा कुहूरजन्यामस्मिन् गिरिकान्तारे भ्रमन्तं मां निवारयति।

(वामकेनावलोक्य)।

करुणावति, किमाह भवती,—कुहूरिति। (सविषादं विहस्य)।

नन्वभिमतैवाधुना कुहूरस्माकम्।

(पादद्वयं पुरतउपसृत्य)।

यदि दयसे, आदिश प्रियाप्रवृत्तिम्।

कथमिति?

दयिताविरहाकुलात्मनो-
न कुहूर्मे न हि निर्वृतिस्थली।
उदितः शशलाञ्छनोऽधुना
ग्लपयत्युद्गमयन् प्रियामुखम्॥

(आकर्ण्य, सविषादम्)।

यथेयं कुहू कुहू इत्याह, तथा व्यक्तमियमप्यनभिज्ञा प्रियोदन्तस्य। तत् किमेषा करोतु तपस्विनी। (अवलोक्य) अये, इयमतिकृपावती प्रियोदन्तं वक्तुम-

इमां कातरेण चक्षुषा मामवलोकयति। भवति, अलं विषादेन। सुखमास्तां भवती। साधयामस्तावत्।

(परिक्रम्योर्द्धमवलोक्य)।

अहह, ललाटन्तपः सप्तसप्तिर्मां सन्तापयति। सुष्ठु खल्विदमुच्यते,—दुःखं दुःखमेवानुबध्नाति,—इति। उपालभे तावदेनम्।

(अञ्जलिं बद्धा)।

भगवन्, सहस्रकिरण,

विरहानलदग्धं मां अग्निगर्भैर्गभस्तिभिः।
भूयः किं दहसि, ? न्याय्या कातरे करुणा सताम्॥

अथवा। अलं त्वामुपालभ्य।

विरहानलदग्धस्य त्वत्प्रतापः कियान् मम।
आशीविषप्रदष्टस्य वृश्चिकस्येव दंशनम्॥

(विभाव्य) भवतु। यावदेनं प्रार्थयामि।

(जानुभ्यां स्थित्वा अञ्जलिं बद्धा)।

भगवन्, त्रिभुवनैकरत्नप्रदीप,

त्वां साक्षिणं परतरं समुदाहरन्ति
तत्त्वावबोधकुशलाः खलु लोकवृत्ते।
आचक्ष्व मे सकललोकललामभूता
कास्तेऽधुना प्रियतमा तरलायताक्षी॥

कथं तूष्णीमेवास्ते! तिष्ठतु । किमनेन वृथा तेजो-गर्व्वितेन ? (इत्युत्थाय परिक्रामति) ।

(विलोक्य) इयमतिमुक्तलता सहकारप्रणयिनी वर्त्तते । एनां प्रक्ष्यामि ।

(खण्डकः) ।

तुवरइ गअपइवरओ पिअअमपेम्ममुद्धओ ।
दइआपेक्खणलालसओ अहिअं लंहिअकाणणओ[१] ॥

(वलन्तिकयोपसृत्य) ।

भवति, लतिके, अपि नाम दृष्टा भवत्या तत्रभवती कौमुदी ?

(वामकेन किञ्चिद्दलित्वा । भ्रमरशब्दं सूचयित्वा) ।

किमाह भवती,—किमुपलक्षणं तस्याः, इति । भवति, श्रूयताम् ।

स्तवकस्तनरुचिरतरा भ्रमरावलिनीलिमचिकुरकलापा ।
अभिनवकिसलयहस्ता कुसुमस्मेरा त्वमिव हि दयिता मे ॥

(द्विपदिकयाऽवलोक्य, सविषादम्) ।

कथमियमपि न जानाति!

निक्षिप्तमकरन्दाश्रुर्धुनाना करपल्लवम् ।
व्यक्तमाह न वेद्मीति क्रोशन्ती मधुपस्वनैः ॥

(१) त्वरते गजपतिवरकः प्रियतमाप्रेममुग्धकः ।
दयिताप्रेक्षणलालसकः अधिकं लङ्घितकाननकः

यावदन्यतो गच्छामि ।

(परिक्रम्यावलोक्य) ।

अयमदूरे करिणीसहायः करी परिभ्रमति । यावदस्मिन् प्रणयबन्धं करोमि ।

(कुटिलिका) ।

दुक्खमहिअहिअआउलओ

(मन्दघटी) ।

पिअअमविरहअवञ्चिअओ ।

(चर्चरी) ।

मिअपई पवणुव्वेल्लिअए
विहरइ विहलो काणणए(१) ॥

(द्विलयानन्तरे चर्चरी) ।

अहिणअमेहसरिच्छा, खंभेरम कहेहि मइ ।
विज्जुप्पीअलवण्णा पिअअम दिट्ठा ण पइ(२) ॥

(जानुभ्यां स्थित्वा) ।

---

(१) दुःखमथितहृदयाकुलकः
प्रियतमाविरहकवञ्चितः ।
मृगपतिः पवनोद्वेल्लितके
विहरति विकलः काननके ॥

(२) अभिनवमेघसदृक्ष, स्तम्बेरम, कथय माम् ।
विद्युत्पीतवर्णा प्रियतमा दृष्टा न त्वया ? ।

करेणुकायां करिनाथ, पश्चात्
रंस्यस्यमुष्यां वशगा तवैषा ।
मां तावदाश्वासय निःसहायं
तिष्ठ क्षणं निष्ठुरतां स्म मा गाः ॥

(विलोक्य सहर्षम्)।

अयमसौ मद्विज्ञापनाकरुणमनाः सत्यमेव गमनान्निवृत्तोगजपतिः। अन्यैव खल्वापन्नानुकम्पनरीतिर्महात्मनाम्। अभ्यर्थये तावदेनम्।

(जानुभ्यामुपविश्य कृताञ्जलिः)।

कथय यूथपते, कृपया मम
यदि वने भवताऽत्र विलोकिता।
ननु वशापरिमन्थरगामिनी
कनकरत्नरुचिर्मृगलोचनी ॥

(चर्चरिकया विलोक्य)।

अये! यथाऽयं स्निग्धोत्फुल्लेन चक्षुषा मामवलोकयति, तथा व्यक्तं विदितोऽस्य प्रियतमावृत्तान्तो भविष्यति!

(द्विपदिकया निरूप्य)।

कथम्!

मन्द्रकण्ठरणितैर्मदधारा-
व्याप्तगण्डसुषमारमणीयः।
शीकरेण करिणीं करिनाथो-
लालयत्यतितरामनुरक्तः ॥

(जम्भलिका) ।

पेक्खहि दीहअवलाओ सद्दाऊरिअदिसाओ ।

अमिअनिमित्तकाणणओ अहिवरिसेइ जलहरओ[१] ॥

एणां प्रणयसुखमनुभवतु । रुचयः खल्वनुरोद्धव्या महताम् । नूनं परतः प्रियोदन्तं कथयिष्यति ।

(इति सप्रत्याशं तूष्णीं स्थितः) ।

(तिर्य्यगवलोक्य सविषादम्) ।

कथमदत्त्वैव प्रतिवचनं प्रियया सममरण्याभ्यन्तरं गन्तुं प्रवृत्तः! उपालभे तावदेनम् ।

(पदद्वयं पुरतउपसृत्य) ।

हंहो गजपते,

दयितावि॒रहातिकातरं
समुपेक्ष्य च्युतभाग्यमद्य माम् ।
उचितं तव गन्तुमत्र नो
विरहं मा स्म गमस्तथापि भोः ॥

सुखमास्तां भवान् । (इति परिक्रामति) ।

(सहसोर्ध्वमवलोक्य, सहर्षम्) ।

हन्त हन्त! प्रत्युज्जीवितोऽस्मि ।

नीलपटावृतदेहा प्रकटितमुखमाचलक्ष्यमाणेयम् ।
दिवमुत्पतिता कान्ता पश्यति मां प्रेमतरलाक्षी ॥

(१) प्रेक्षस्व दीर्घकवलाकः शब्दापूरितदिक्कः ।
अमृतनिमित्तकाननकः अभिवर्षति जलधरकः ॥

(खण्डधारा)।

पिअअमविरहविआरिअओ गरुदुक्खोम्माइअमणओ।
वाहविमोक्खणदुक्खिअओ धावइ गहणे वाउलओ[१]॥

अहह!

नीलं निचोलखण्डं रत्नैः खचितं समुद्वहन्त्येषा।
वपुषैव सुप्रसन्ना शरदीव कलिन्दकन्यका कमलैः॥

कथमद्यापि न मामुपसर्पति! (सप्रणयकोपम्) उपालभे तावच्चिरकारिणीम्।

(चर्चरिकया ऊर्द्धमुखमुपविश्याञ्जलिं बद्धा)।

मम तावत्,

क्लेशं सुन्दरि, नैव वेद्मि नितरां मर्म्मस्पृशं दुःसहं
विश्लेषात्तव यस्ततः प्रियतमे, मौनं समालम्बसे।
सम्प्राप्तोदयिते, त्वदेकरसतां सोऽयं जनो निष्ठुरे,
आस्तां क्लेशविमोचनं कथमहो वाचाऽपि नालप्यते!॥

अथवा। न उपालभे। सुलभाभिमाना खलु स्त्रीजातिः। प्रसादयाम्येनाम्।

(खण्डिका)।

(१) प्रियतमाविरहविकारितकः गुरुदुःखोन्मादितमनस्कः।
वाष्पविमोचनदुःखितकः धावति गहने व्याकुलकः॥

कुसुमकिसलअभूसिअअरणओ पिअअमसोअसदुक्खो।
अन्तरप्पअड़पावअओ लक्खीअदि विअ रुक्खो[१] ॥

(खण्डिकान्तरे चर्चरी)।

आगच्छहि पिअअम, सुन्दरिए, तुह विरहे दुहिअस्स मज्झ णए।
किं कलुणइ कोवं कुणहीअ मज्झि मिअलोअणि, तुमं पसिअ[२]॥

(सकरुणम्) भवति,

मया दुःखात् किञ्चित्परुषमुदिते निष्ठुरधिया
प्रिये, त्वच्चेत्कुप्येः पुनरपि हतः स्यां विधिहतः।
किमन्यद्वा ब्रूमो विधुमुखि, तवैवास्मि नितरां
न पारुष्याद्दत्रं त्यजति किल माला जलमुचाम् ॥

(अवलोक्य) कथमद्यापि न प्रसीदति? भवतु। भूयः प्रसादयामि।

सुतनु, प्रसीद तावत् प्रभवन्त्योऽपि च न खलु कुटुम्बिन्यः।
दयितेषु दीर्घरोषास्तदेकरसतां गतेषु स्युः ॥

(वामकेन बलित्वा आकाशे)।

किमाह भवती,—किमेवं कातरोऽसि,—इति।

(सखेदम्) भवति, मम भाग्यविपर्य्ययादेतदपि न जा-

(१) कुसुमकिसलयभूषितकरणकः प्रियतमाशोकसदुःखः।
अन्तरप्रकटपावकको लक्ष्यते इव वृक्षः ॥

(२) आगच्छ प्रियतमे, सुन्दरिके, तव विरहे दुःखितस्य मम नताया।
किं करुणे कोपमकरोः मयि मृगलोचनि, त्वं प्रसीद ॥

नासि! किं ब्रवीमि? भवत्याएव विरहो मां विधुरयति। शृणु प्रिये, शृणु।

वाचस्ते श्रवणान्तरेऽमृतरसं सिञ्चन्त्यनल्पं मम
ब्रह्मानन्दरसादपि प्रियतमे, स्पर्शस्तवाह्लादकः ;
त्वं कर्पूरशलाकिकेव नितरामाप्यायनी चक्षुषो-
र्विश्लेषस्तु तवापि यद्व्यथयति प्रायो न जानासि तत् ॥

(साग्रहम्) आगत्य जीवितं तावन्ममावलम्बस्व। पश्चात् सर्व्वं श्रोष्यसि सर्व्वं कथयिष्यामि।

(पुनश्चर्चरी)।

वाहजलाउलदुक्खिअवअणओ
झीणगई पेक्खहि वाउलओ।
णिअकणेरुविओअदुक्खिअहिअओ
तम्मइ गअपई भमिअविविणओ[१] ॥

(आकाशे)।

पुनः किमात्थ,—कथमस्मद्विरहमात्रेणैवं कातरोऽसि,—इति। (सखेदम्) सुन्दरि, यदेवं मामात्थ, व्यक्तमात्मानं न वेत्सि।

कथमिति?

समीपे स्थित्वा त्वं विधुमुखि, रसैरार्द्रहृदया

(१) वाष्पजलाकुलदुःखितवदनकः क्षीणगतिः प्रेक्षस्व व्याकुलकः।
निजकरेणुवियोगदुःखितहृदयः ताम्यति गजपतिर्भ्रमितविपिनकः

यदा प्रेम्णा स्निग्धाममृतमिव वाचं कथयसि ।
तदा वर्णं वर्णं प्रति हृदयमेतत् प्रियतमे,
मुदं यामाप्नोति त्वमसि किल नैतत्सुविदिता ॥

कथय, कथमेतद्विस्मर्य्यताम् ? अन्यच्च । भवति,

न मुग्धे, जानासि त्वमसि किल रत्नं निरुपमं

(आत्मानं निर्दिश्य) ।

जनोऽयं जानाति प्रचुरसुकृतैस्त्वत्परिचितः ।

उचितं खल्वेतत् ।

न रत्नं जानाति स्वमपि गुणजालं सुविपुलं
तदेतद्वेत्त्युच्चैः किमपि मणिकारो भिषगपि ॥

(आकाशे) ।

पुनः किमात्थ,—किमित्यात्मानं न नियमयसि,—इति । (सखेदम्) भवति, सर्व्वथा अस्मदीयानां भाग्यविपर्य्ययानामयं प्रभावः,—यत् त्वमपि नाम एवं ब्रवीषि ! तथापि श्रूयतां भूतार्थः ।

प्रिये, प्रेम्णि प्रायस्तव मधुरवारांनिधिरसे
निमग्नं सन्तप्तं हृदयमिदमादौ तृणमिव ।
रयादस्यैवैतद्भ्रमति न च शक्यं नियमनं
न चाकाङ्क्षे ध्यायाम्यपि न परिणामं विधुमुखि, ॥

(विलोक्य, सानन्दम्) ।

हन्त हन्त! चिरात्सम्पन्नो मे मनोरथः। एषा खलु मदनुनयप्रसन्ना प्रियतमा ममाभ्यर्णमभ्यागन्तुं प्रवृत्ता। प्रत्युद्गच्छाम्येनाम्।

(खण्डधारा)।

दइआपेक्खणलालसओ मिच्छापिअअमवञ्चिअओ।
दुक्खाहूणिअमाणसओ अहिअं तम्मइ जुआणओ[१] ॥

(ससम्भ्रममुत्थाय आकाशबद्धलक्ष्यो बाहू प्रसार्य्य)।

एह्येहि तामरसकोमलपल्लवाङ्गि,
बिम्बोष्ठि, चन्द्रमुखि, पीननितम्बबिम्बे।
आलिङ्ग्य मे वरतनो, विरहाग्निदग्धा-
न्यङ्गानि जीवय पुनः करुणामृतेन ॥

(चर्चरिकया कतिपयपदं पुरत उपसृत्य द्विपदिकया निरूप्य। सास्रम्)।

कथम्!

तरलितरुचस्तारा एता न रत्नपरम्पराः
इदमपि नभो वैदूर्य्याभं न नीलनिचोलकम्।
अयमपि शशी पूर्णाभोगो मुखं न मृगीदृशः
स्फुरति नितरामङ्कः सोऽयं न नाम विलोचनम् ॥
पृषदश्वोपनीतस्य मेघस्य गतिपर्य्ययात्।
आयन्निवेन्दुराभाति नायाति मम कौमुदी ॥

(इति मूर्च्छितः पतति। पुनर्द्विपदिकयोत्थाय सविषादम्)।

---

(१) दयिताप्रेक्षणलालसकः मिथ्याप्रियतमावञ्चितकः।
दुःखाघूर्णितमानसकः अधिकं ताम्यति युवकः ॥

ज्ञातं मया प्रियतमा दिवमुत्पतिता निरीक्षते प्रेम्णा।
यावन्नीलविहायसि सकलशशधरः परिस्फुरति॥

(इति सकरुणं विचिन्त्य)।

**अहह! अतितरां परिश्रान्तोऽस्मि। यावदस्य छायातरोर्मूले क्षणं विश्राम्यामि।**

(परिक्रम्य तत्रोपविश्य, करतले कपोलं संस्थाप्य सखेदमात्मगतम्)।

कस्स, सि सफलिअजम्मो
लोअण, जाआ तुह वि सफलदा व्व।
महुरं सुणीअ वअणं
पेक्खीअ विमुद्धमाणणं से[१]॥

(निःश्वस्य)।

एतावदेव सुकृतं कथमप्यासीन्ममापि मन्दस्य।
आसादिता वरोरूः कश्चित्कालं यतो मयाऽप्येषा॥

(इति विभाव्य। सहसोत्थाय)।

**क्व पुनर्मे प्रियतमा तिष्ठति?** (विचिन्त्य) **भवतु। तदेव लतागृहमुपगम्य प्रियामन्वेषयामि, यत्र प्रागपि तत्रभवती मया प्राप्ता।** (परिक्रम्य। विलोक्य) **इदमदूरे लतागृहं दृश्यते।** (इति त्वरितं परिक्रामति)।

(अनन्तरं चर्चरी)।

(१) कर्ण, असि सफलितजन्मा लोचन, जाता तवापि सफलतैव।
मधुरमश्रौषीर्वचनं अद्राक्षीर्विमुग्धमाननं तस्याः॥

कुङ्कुमवण्ण सिणिद्धअकन्ती
विरहमिलाणा वेअ हसन्ती ।
एत्थ णु मज्झ परिचिट्ठदि कन्ती
गहणे विविणे क्खु परिभमन्ती[१] ॥

(चर्चरिकयोपसृत्य) ।

भगवन्, लतागृह,

कथयतु दयितोदन्तं तद्विरहपरिमथितस्य मेऽद्य भवान् ।
कुसुमसुकुमारगात्री सुतनुस्ते पूर्व्वदृष्टैव ॥

(द्विपदिकयाऽवलोक्य) ।

कथं तूष्णीमास्ते ! उपालभे तावदेनम् । भगवन्, निकुञ्ज,

त्वत्तः प्राङ्मदिरेक्षणा प्रियतमा प्राप्ता मया कौमुदी
सा नष्टा पुनरप्यतस्त्वमधुनाऽप्यस्माभिरभ्यर्थ्यसे ।
कोऽयन्ते मतिविभ्रमोऽद्य शरणं प्राप्ते जने दुःखिते
आस्तां तावदनुग्रहो मधुरया वाचाऽपि नालप्यते ॥

कथमयं प्रत्युत्तरमप्रयच्छन्नवधीरयत्येव माम् !

(अञ्जलिं बद्ध्वा) ।

अवधीरणामपीमां निकुञ्ज, तव मर्षये कुरङ्गाक्षीम् ।
तां मञ्जुलमुखकमलां पूर्व्वमिवार्पयसि चेद्भूयः ॥

(१) कुङ्कुमवर्णा स्निग्धककान्तिः विरहम्लानैव हसती ।
अत्र नु मम परितिष्ठति कान्ता गहने विपिने खलु परिभ्रमन्ती

(चर्चरी)।

दिट्ठो पञ्जि मिअलोअणि तणुई
जहणभरालस थणभरगरुई।
वअनविनिन्दिअससहरकन्ती
दीहापाङ्गि लदाघर, कन्ती[१]॥

(विभाव्य)।

कथमयमारब्धमौनव्रतः साधुमिवात्मानं दर्शयति! (सरोषम्) अरे रे निकुञ्ज, क्वेदानीं यास्यसि?

प्रागेकवारमसि मे दयिताऽपहारी
स्पष्टं प्रिया न खलु सा पुनरेव नष्टा।
तामर्पयाशु यदि काङ्क्षसि मङ्गलं त्वं
न क्षम्यते नृपतिभिः प्रथितो हि चौरः॥

(पुनश्चर्चरी)।

(चर्चरिकया विलोक्य) कथमयमानमितपूर्व्वकायो मां प्रणमति! (सरोषशिरःकम्पम्) नाहं नाहं दयितापहारिणं क्षमिष्ये। अथावश्यन्तवात्मनो रिरक्षिषा, अलं प्रणतिविडम्बनाभिः? श्रूयतामभिसन्धिः।

(सविनयम्)।

नितान्तं यच्छ मे कान्तां कुञ्ज, कुञ्जरगामिनीम्।

---

(१) दृष्टा त्वया मृगलोचनी तन्वी जघनभरालसा स्तनभरगुर्व्वी।
वदनविनिन्दितशशधरकान्तिः दीर्घापाङ्गी लतागृह, कान्ता॥

पश्चात् त्वामर्चयिष्यामि तद्धस्तकुसुमैरहम् ॥

(पतङ्गविक्रोशमाकर्ण्य सविषादम्) ।

यथाऽयं परिक्रोशति, व्यक्तमस्यापि न गोचरस्तत्र-भवत्या वृत्तान्तः । तत्कुतः पुनरत्रभवत्याः प्रवृत्ति-मागमयेयम् ।

(परिक्रम्यावलोक्य) ।

अये, अयमसौ कदम्बशाखानिषण्णः प्रियाऽनुगतः कपोतकस्तिष्ठति । सम्भावयाम्येनम्,

(चर्चरिकयोपसृत्याञ्जलिं बद्ध्वा) ।

भगवन्, विहगोत्तम,

निरालम्बे मार्गे चरसि कणभुक्चोऽसि नितरां
सदा तिष्ठस्युच्चैरुपरि मनुजानां कृतधियाम् ।
ध्रुवं सत्यव्रतोऽसि प्रचुरवनिताप्रेमरसिकः
परं सान्द्रानन्दं कलयसि विलिप्तोऽसि न च तैः ॥

किं बहुना,

गच्छन्तो भूतलान्तेऽपि प्रस्खलन्त्यल्पमेधसः ।
त्वन्तु स्खलद्गतिर्नासि सत्पत्त्वान्नभस्यपि ॥

द्विजपते, भूयान् खलु मम त्वयि बहुमानः । कुतः ?

अवदातत्वमहिंसा द्विजत्वमित्यावयोः समा धर्माः ।

(सकरुणम्) ।

विरहाकुलितोऽस्मि सखे, दयितायास्त्वं पुनर्मा भूः ॥

यावत्प्रक्ष्यामि।

(अनन्तरे चर्चरी)।

अतुलपओहर विउलजहणभरालस मज्झ सुकन्ती।
दिट्ठो पइ पाराअअ, काणणए भमन्ती[१]॥

भो विहगकुलललाम, यदि तावत्,

दृष्टा भवेत् प्रियतमा तरलायताक्षी
क्वापि प्रियारसविशेषविशेषविज्ञ।
आचक्ष्व मे विरहजर्ज्जरिताय बन्धो,
प्रोद्दामशोकविकलः शरणागतोऽहम्॥

अयं "वाग्वाकम्"—इत्याह। न खलु विदितमस्य, कं प्रति अस्मदीया प्रश्नवाक्,—इति। भवतु। विज्ञापयामि। भगवन्, विहगराज,

एषाऽनुयोगवाञ्छे प्रियया विश्लेषितस्य दैवेन।
त्वां प्रत्येव दयालुं दयया शंसाद्य साऽधुना कुत्र?॥

(त्वरां स्थित्वा) कथं न कथयति! उपालभे तावदेनम्। हंहो विहगपते, स्थाने परेषामप्यात्मानुमानेन प्रवृत्तिर्महात्मनाम्। कुतः पुनरयन्ते मन्दभाग्ये मयि प्रतीपो व्यवहारः?

(१) अतुलपयोधरा विपुलजघनालसा मम सुकान्ता।
दृष्टा त्वया पारावतक, कानने भ्रमन्ती॥

क्षणमपि भवान् कार्य्यस्यार्थे दयितां गताम्
अपि न सहते विच्छेदोत्थामुपैति गुरुव्यथाम् ।
कथमतितरां सारङ्गाक्ष्या रहिते मयि
कथय करुणां कारुण्यार्द्रे न खल्ववलम्बते? ॥

(चर्च्चरिकयाऽवलोक्य) ।

कथमयं विस्फारितग्रीवो मूर्द्धानमाघूर्णयन् सगर्व्वं पुनः पुनर्वाग्वाकमित्याह! नूनमयमस्मदुपालम्भमसहमानः पापस्यैवैषा वागिति मामधिक्षिपति। धिक्कष्टं, एतादृशो मम दुरितपरिणामः, यदयमपि नाम एतावन्तमप्युपालम्भं न सहते!

(द्विपदिकया निरूप्य) ।

कथमयमधिक्षिप्यैव मां कलत्रानुवृत्तौ प्रवृत्तः! (सखेदम्) सर्व्वथा परिभवास्पदं भाग्यविपर्य्ययः ।

(परिक्रम्यावलोक्य च) ।

हन्त हन्त, कथमियमसौ प्रियतमा मे सरसि निमज्जति! अहह,

एतन्मुखं विकचतामरसप्रकाशं
लोलभ्रमद्भ्रमरविभ्रमलोचनान्तम् ।
आलक्ष्यते सरसि मज्जदिव प्रियायाः
सङ्गाग्यविन्दुरिव दुर्गतनीरसिन्धौ ॥

यावत् सम्भावयाम्येनाम्!

(जम्भलिका)।

विरहुम्माअविआरओ दइआलाहलालसओ।
सरवरुच्छङ्गानुगओ तम्मइ भमिआरण्णओ[१] ॥

(परिक्रम्यावलोक्य)।

कथमयं सरित्पतिस्तरङ्गहस्तैरिमां धर्षयति! उपालभे तावदेनम्। (अञ्जलिं बद्ध्वा)।

न खलु शैवलिनीदयित, त्वया
प्रियतमा मम धर्षयितुं क्षमा।
व्यसनितोऽपि न जातु महाशयः
परकलत्ररुचिः खलु सज्जनः ॥

(उपसृत्य द्विपदिकया निरूप्य। सास्रम्)।

कथम्!

परमार्थकमलमेतत् न पुनः स्मेराननं प्रियतमायाः।
इदमपि मधुकरमिथुनं विभ्रममूले न लोचने तस्याः ॥

(इति मूर्च्छितः पतति। उत्थायोपविश्य विभाव्य च)।

अहह, प्रतारितोऽस्मि। कुतः पुनरस्यां रात्रौ कमलविकाशः? नूनं मुखमेतत् भविष्यति। भवतु। पुनरपि निरूपयामि।

(चर्चरिकयोत्थाय निरूप्य, सविषादम्)।

कथं सत्यमेव कमलम्! तत् किमिदं दिनं भवेत्?

(१) विरहोन्मादविकारकः दयितालाभलालसकः।
सरोवरोत्सङ्गानुगतः ताम्यति भ्रमितारण्यकः ॥

(द्विपदिकया दिशोऽवलोक्य) ।

असंशयं रात्रिरियम् । (सवितर्कम्) कथं मत्प्रतारणा-व्यसनिना दैवहतकेन समयोऽपि लङ्घितः ! (विभाव्य) अथवा । तपस्विजनाध्युषिता देवभूमयश्चैवमादयः प्रदेशाः, तत्सर्व्वमुपपद्यते ।

(निःश्वस्य) अहह, परिश्रान्तोऽस्मि । न खल्वतः परं शक्नोमि प्रियामन्वेष्टुम् । यावदिहैव तरङ्गवातसुलभे सरस्तटे क्षणं विश्रामं करोमि । (इति सविषादमुपविश्य स्थितः) ।

(आकर्ण्य, ससम्भ्रममुत्तिष्ठन्) ।

हन्त हन्त, पश्चिमेनारण्यं हंसाः कूजन्ति । नूनमिदानीमुपलब्धः प्रियोदन्तो भविष्यति । कुतः ?

कूजितमनुहरतीदं हंसानां नूपुरस्य दयितायाः ।
शिञ्जितमियता शङ्के जानन्त्येते प्रियोदन्तम् ॥

कथमन्यथा एतादृशस्य कूजितस्याधिगमो हंसानाम् ? स्थाने खल्वाकर्णितेनानेन कूजितेन मानसं मे समाश्वसिति ।

तथाहि,

आकर्ण्य दूरादपि कूजितानि
योगीव साक्षादशरीरवाचम् ।
स्थाने मनोनिर्वृतिमभ्युपैति

चक्षुः परोक्षं तदिदं वदन्ति ॥

(विचिन्त्य) **न खलु प्रत्येमि । कुतः ?**

ये तावद्दयिताप्रवृत्तिविषये भूयो मयाऽभ्यर्थिता-
स्तेषां मय्यवधीरणा कथमपि प्रायोऽधुना युज्यते ।
आत्माऽप्येष विवेकमन्थरतया मद्भाग्यदोषेण वा
मामुच्चैर्लपयत्यरातिरिव तां सम्भावयन्नन्यथा ॥

(इति सकरुणं निःश्वस्य)।

**भवतु । पश्यामि ।**

(परिक्रम्य दूरादवलोक्य च सहर्षम्)।

**कथम् !**

सन्तर्पणमतिमात्रं कूजितमेतन्न राजहंसानाम् ।
विभ्रमविशेषभूमिर्नूपुरशिञ्जितमिभेन्द्रगामिन्याः ॥

(सवितर्कम्) **अपि नाम ममैव कौमुदी भवेत् ? अथवा । नास्ति ममाधन्यस्य एतादृशं सौभाग्यम् । नूनमप्सरसामयं सञ्चारः । निरूपयामस्तावत् ।**

(इति सत्वरं परिक्रामति)।
(खण्डधारा)।

पिअविरहाउलमाणसओ विविणे अहिअं वाउलओ ।
दइआपेक्खणणिव्वुदओ हरिसक्कच्छइ जुआणओ[१] ॥

(ततः प्रविशन्ति कौमुदी-सुन्दरी-सालङ्कायन-परिव्राजिकाः)।

(१) प्रियाविरहाकुलमानसकः विपिने अधिकं व्याकुलकः
दयितापेक्षणनिर्वृतकः हर्षं गच्छति युवकः ॥

सुधा। (विलोक्य) कथं कौमुदीव दृश्यते! (उन्मृज्य चक्षुषी। निरूप्य) कथं सत्यमेव कौमुदी! (इति मूर्च्छितः पतति)।

परि। वत्से, कौमुदि, अविलम्बं सम्भावयैनम्।

कौमु॰। (सत्वरमुपसृत्य) अम्म, कधं एरिसीं दसां गदो अज्ज-उत्तो[१]! (इति मूर्च्छिता पतति)।

(सर्व्वे सत्वरमुपसर्पन्ति)।

साल। वयस्य, समाश्वसिहि समाश्वसिहि।

सुन्द। सहि, समस्सस समस्सस[२]।

परि। वत्से, समाश्वसिहि समाश्वसिहि। वत्स, [समा]श्वसिहि समाश्वसिहि।

कौमु। (समाश्वस्य) अज्जउत्त, समस्सस समस्सस[३]

सुधा। (समाश्वस्य, कौमुदीं विलोक्य सहर्षविस्मयम्) कथम्!

सैषा मम प्रियतमा कमनीयकान्तिः

(सुन्दरीमवलोक्य)।

सेयं सखी

(परिव्राजिकामवलोक्य)।

भगवतीयम्

(सालङ्कायनमवलोक्य)।

---

(१) अहो, कथमीदृशीं दशां गत आर्य्यपुत्रः।

(२) सखि, समाश्वसिहि समाश्वसिहि।

(३) आर्य्यपुत्र, समाश्वसिहि समाश्वसिहि।

अयं वयस्यः।

(साश्चर्यम्)

उत्पातवातविगमेऽधिकदर्शनीयो-

दिष्ट्याऽभवन्मम स एव हि जीवलोकः॥

परिव्राजिकासालङ्कायनौ। यथाऽऽह भवान्।

कौमुदीसुन्दर्यौ। एव्वं णु एदं। विसेसदो मह मन्दभाइणीए[१]।

सुधा। (उत्थाय) भगवति, वन्दे। (इति प्रणमति)।

परि। समीहितसिद्धिर्भूयात्। वत्स, क्लिष्टोऽसि। क्षण-मात्रं तावत् विश्राममनुभव।

सुधा। भगवतीप्रसादेनैवानुभूतो विश्रामः। (कौमुदीं प्रति) प्रिये,

त्वद्विप्रयोगतमसोन्मथितेन वार्त्ता

पृष्टा मया तरुलताविहगादयोऽपि।

सम्भाव्य ते मुखमितीन्दुसरोजमस्मि

प्राप्तो न खल्विह न सह्यमथाभिषङ्गम्॥

किं बहुना,

जन्मान्तरादिवोत्तीर्णस्त्वद्वियोगतमोऽर्णवात्।

दिष्ट्या त्वां प्राप्तवानस्मि च्युतां मृत्युमुखादिव॥

कौमु। हद्धी हद्धी, मह मन्दभाइणीए कए एरिसीं

---

(१) एवं नु इदं। विशेषतो मम मन्दभागिन्याः।

दृसां पत्तो अज्जउत्तो! अवराद्धा म्हि अज्जउत्तस्स[१]।

सुधा । प्रिये, अपराधइति न खल्वधिगच्छामि । कथ्यतां तावदुदन्तः ।

कौमु । सुणादु अज्जउत्तो । तहिं दिअहे साअंतणकम्मस्स गदे क्खु अज्जउत्ते ललिदुज्जाणसोहावलोअणकुदूहला मन्दभाइणी तत्थ गदा म्हि[२] ।

सुधा । श्रुतमेतावदस्माभिः । ततस्ततः ?

(सर्व्वे समुत्सुकमाकर्णयन्ति) ।

कौमु । तदो कावि विअडवेससरीरा पिसाअी ... सहसा मङ्गेण्हिअ सुसमग्गमुप्पदिदा । एत्तिअ... अहं सुमरामि । तदो भअवदीए परित्तादा ...

परि । परतः श्रूयताम् । अहं किल निर्व्विक... समाधिं परिचेतुमिहागत्य विन्दुमतीप्रपाते नि... तप्राणा योगानुष्ठानमकरवम् ।

साल । ततस्ततः ?

---

(१) हाधिक् हाधिक्, मम मन्दभागिन्याः कृते ईदृशीं दशां प्राप्त... पुत्रः ! अपराद्धाऽस्मि आर्य्यपुत्रस्य ।

(२) शृणोतु आर्य्यपुत्रः। तस्मिन् दिवसे सायन्तनकर्म्मणो गते खल्व... ललितोद्यानशोभाऽवलोकनकुतूहला मन्दभागिनी तत्र गताऽ...

(३) ततः काऽपि विकटवेशशरीरा पिशाचीव सहसा मां गृहीत्वा... मार्गमुत्पतिता। एतावन्मात्रमहं स्मरामि। ततो भगवत्या परि... ऽस्मि ।

भूयोऽमलसंयोगात् मृत्स्ना रूपान्तरं चिराद्व्रजते ।
न खलु कथञ्चित् पक्वा मध्ये श्यामा बहिर्न रक्ताऽपि ॥

अपिच,

लौहधातुर्विशेषेण रञ्जितः काञ्चनद्रवैः ।
बहिः काञ्चनवर्णोऽपि न तद्भावं प्रपद्यते ॥

साल । वयस्य, यथाऽऽज्ञापयति भगवती । नैतत् विस्मयास्पदं; यत् तादृशस्य योगाचारस्याधिगमः, यच्च महतस्तपसोऽप्येकपदएव व्ययः । तथाहि,

किं दुर्ज्जना नातिचिरादकाण्डे
भवन्ति सत्यं पृथुवृद्धिभाजः ।
तेषां न खल्वेकपदे समस्त-
व्ययोऽप्यकस्मात्, किमत्र चित्रम् ॥

वत्स, सम्यगाह सालङ्कायनः । तदिदानीम्,

सागरेणेव गङ्गेयं भवता परिगृह्यताम् ।
वृथैव दुर्ज्जनैः शैलैरिव व्याकुलिता भृशम् ॥

इति कौमुदीमर्पयति) ।

। (कौमुदीं प्रतिगृह्य) सबहुमानं प्रतिगृहीतो भगवती-
सादः ।

। वत्स, प्रतिहतास्ते प्रत्यूहाः । तदतः परं मत्प्रसा-
त्,